शृणु। सर्वेन्द्रियविषयप्रत्याहृतेन मनसा यथाश्रुतगृहीतभाविताना देवताना नानात्वैकत्वत्रित्वेष्वात्मनो हृदये विज्ञानमयीमालिख्य प्रतिकृतिं लक्ष्यीकृत्यानन्यमनास्तत्कालमधीत्य याज्यां वषट्करिष्यंस्तदनुचिन्तनसंस्कारसंतानैकरसेन मनसा हविष्यमभिसंधाय देवतां ध्यायेदित्यस्य विशेषस्य द्योतनार्थं प्राप्तस्यापि मनसो ग्रहणं मनसा ध्यायेदिति। ब्राह्मणं चैतदर्थमेवोक्तमाचार्येण। अत्र हि विशेषतः पुरुषार्थोऽवबद्ध इति। अतोऽन्यथा हि देवताचिन्तनैशून्यं कर्मैतस्मिन्प्रधानकाले विकलमित्यफलमेव स्यात्। एष एव ध्यानकालो यजमानस्याहुतिप्रक्षेपकालेः। न तथान्येषामध्वर्युप्रभृतीनामाहुतिप्रक्षेपव्यापृतानाम्। लक्षणं हि होतेति।

ब्राह्मणवाक्ये मनसापदस्य प्रयोजनम्

'इतीमान्येकादशाप्रीसूक्तानि' अनुक्रान्तानि। दशधा दशतयीषु। तेषामेकादशं प्रैषिकमिति। इतीमानि। उपप्रदर्शनार्थं इतिकरणः। एष एव तेष्वपि निर्वचनविचारावधारणकल्पः। यस्तु तद्गतः कश्चिद्विशेषः स उच्यते। 'तेषां वासिष्ठमात्रेयम्' इत्येवमादि। वसिष्ठेन दृष्टं वासिष्ठम्। अत्रिणा दृष्टम् आत्रेयम्। वाध्र्यश्वेन दृष्टं वाध्र्यश्वम्। गृत्समदेन दृष्टं गार्त्समदम्। कः पुनरसौ विशेषः। 'इति' एतानि 'नाराशंसवन्ति'। अथ पुनः 'मैधातिथं दैर्घतमसं प्रैषिकमिति'। मेधातिथिना दृष्टं मैधातिथम्। दीर्घतमसा दृष्टं दैर्घतमसम्। प्रैष इति ग्रन्थः। तेषु यत्तत्प्रैषिकमिति तदिहोपवर्णितम्। एतानि 'उभयवन्ति'। 'अतोऽन्यानि' यानि चत्वारि अवशिष्यन्ते तानि 'तनूनपात्वन्ति'। अत्र नाराशंसयाजिनो वसिष्ठा-

आप्रीसूक्तान्येकादश

तेषु कानिचिन्नाराशंसवन्ति

कानिचिदुभयवन्ति शेषाणि तनूनपात्वन्ति

१ क. ख. ग. ज. व. झ. ट. ठ. द्योतनायार्थप्राप्त° च. द्योतना°र्थं° या. २ च. ह. ३ ग. च. ज. चिन्तशून्यं. ४ क. ख. घ. झ. ट. ठ. एव च ध्या°; ग. एष च ध्या°; च. एव ध्या° च. ५ क. ख. घ. झ. ठ. ठ. °काले; च. °कालैः° ले. ६ क. ख. घ. झ. ट ठ. °मानीति. ७ क. ख. घ. झ. ट. ठ. °नार्थमिति°. ८ ग. ज. 'सः' नास्ति.

दयः । तेभ्योऽन्ये तनूनपाद्याजिनः । तान्येतान्यमुना विभागेनावस्थितानि एकादश एकनिर्वचनावधारणानि ।

अतोऽन्यानि दाशतयादाप्रीसूक्तवर्गात् सौत्रामण्यां त्रीणि ( मैत्रा० सं० ३ । ११ । १ ॥ ३ । ११ । ३ ॥ ३ । ११ । ११ ) अग्न्यश्वमेधयोरेकैकम् ( मैत्रा० सं० २ । १२ । ६ ॥ ३ । १६ । २ )। तत्र यानि सौत्रामण्यां तान्यनाग्नेयानीति न परिसंख्यातानि प्रैविकेऽननुक्रमणात्तेषाम् । आग्निकाश्वमेधिके तु कर्मान्तरेऽपि विनियुज्येते न केवलमाप्रीषु । इष्टकोपधाने " आग्निकमुत्तमायां चितौ ' समास्त्वाग्न ऋतवो वर्धयन्तु ' ( मैत्रा० सं० २ । १२ । ५ ) इति " ' द्वादशाप्रीरन्त्येषु ' इति । हस्तग्रहणमाश्वमेधिकं यजमानस्य ' समिद्धो अञ्जन्कृदरं मतीनाम् ' ( मैत्रा० सं० ३ । १६ । २ ) इति ' आप्रीभिर्हस्तं गृह्णाति ' इति । अत आप्रीकार्ये प्रयोगव्यभिचारादाप्रीसूक्तवर्गमध्यपठिते अपि न परिसंख्याते आचार्येण । सौत्रामण्यां तु प्रथमस्य पशोर्या द्वितीया आप्री तस्यामेकस्यामेव च नराशंसतनूनपातौ ' नराशंसः प्रति शूरोऽभिमानस्तनूनपात्प्रति यज्ञस्य धाम ( मैत्रा० सं० ३ । ११ । १ ) इति । तत्र नराशंसयाजिनां वसिष्ठप्रभृतीनां यागे निपातवत्तनूनपात्पदमनर्थकं पादपूरणमात्रेणोपकारं मन्त्रे करोति । तथा तनूनपाद्याजिनां नराशंसपदम् । एष एवान्यत्राप्येवंविधे देवतापदे प्रयोगादन्यथाभाविनि देवतापदनिपातकल्पः । तद्यथा । अश्वहविष्यश्वप्रतिग्रहप्रायश्चित्ते ( मैत्रा० सं० २ । ३ । ३ ॥ काठ० सं० १२ । ६ ) ' यदद्य सूर्य ' इति सौर्यावारुणानां याज्यानुवाक्ये ( मैत्रा० सं० ४ । १२ । ११ ॥ ऋ० सं० ७ । ६० । १ )। तयोर्मित्रार्यम्णोर्यानि लिङ्गानि तानि निपातवद्भवन्ति । यथा

अन्येषामाप्रीसूक्तानां यास्केन निर्देशो न कृतः । तस्य कारणानि

१ ग. ज. तेभ्योन्योद्याजेन तान्ये°; च. तेभ्योऽप्यन्ये. २ ग. °तद्यादा. ३ च. °रन्त्येयेष्वि°. ४ ग. ज. अस्त°. ५ ध. झ. ठ. शंसोमिमा°; ट. शसोमिमा° शूरो. ६ ग. ज. °याजिनां नराशंसपदम् । एष एवान्यवत्तनूनपा°. ७ क. ख. ध. झ. ट. ठ. °पदानां निपा°; च. °पदानि° दानां. ८ क. ख. ध. झ. ट. ठ. ह. सौर्यमित्रावरुणानां; ग. ज. °सौर्यावरुणानां; च मैार्यावरुणानां° र्यमित्रा.

'प्र चित्रमर्कं गृणते तुराय' ( ऋ० सं० १ । ६६ । ९ ) इति । अत्र संबोधनान्तमप्यग्निपदं नैपातिकं केवलमारुते हविषि (आश्व०श्रौ०२।७) । चातुर्मास्येषु वैश्वदेवप्रयोगे पुनस्तदेवार्थवत् ( आश्व० श्रौ० २ । १६ ) । 'आग्निमारुतीं पृश्निमालभेत वृष्टिकामः' ( मैत्रा० सं० २ । ५ । ७ ) इत्यत्र षड्ढृचैप्रयोगे । एष एव देवतापदविचारः ।

सर्वे प्रयाजा आग्नेया इति पक्षे 'तिस्रो देवीः' इत्यस्य आग्नेयत्वेन विवरणं कथमपि क्रियेत

यस्मिन् पक्षे सर्वे आग्नेयाः प्रयाजाः ' प्रयाजान्मे अनुयाजांश्च केवलान् ' ( ऋ० सं० १० । ५१ । ८ ) इति मन्त्रदर्शनात्तस्मिन्पक्षे ' तिस्रो देवीः ' इत्यत्र भारती द्युस्थाना मध्यस्थाना सरस्वती पृथिवीस्थाना इडा इति स तद्देवतात्रयं दुःप्रतिसमाधानम् । स्थानान्तरापत्तिस्तुल्या चाग्निरेवैता देवता इति प्रतिसमाधानम् । सौत्रामण्यां तूत्तमे पशौ ' समिद्धो अग्निः समिधा' इत्येता आप्रियः (मैत्रा० सं० ३ । ११ । ११ ) । तासु तनूनपादेकः ' तनूनपाच्छुचिव्रतः ' इति ( काठ० सं० ३८ । १० ) । नास्त्येव नराशंसः । तत्र नराशंसयाजिनां सौत्रामणीप्रयोगे कथं प्रयोगः । किं तनूनपादेव प्रयुज्यतामुतान्यतः कुतश्चिदार्षीसूक्तादाहियतां नराशंस इति न्यायविदो मेधाविनः समनुगंस्यन्ते विशेषमिति ॥ २२ ॥

सौत्रामण्यां प्रतिसमाधानं प्रायोऽशक्यम्

---

इति निरुक्तवृत्तौ त्रयोदशोऽध्यायः समाप्तः ।

१ घ. झ. ट. ठ. षड्डृचः प्र°. २ क. ख. घ. झ. इला इति; ट. ठ. इळा इति. ३ म. ज. 'तत्' नास्ति. ४ क. ख. घ. झ. ट. ठ. समिधा सुसमिद्धो वरेण्य इत्ये°. ५ क. ख. घ. झ. ट. °पादेकः°; च. °पादेकः° वै. ६ क. ख. घ. झ. ठ. °नपाच्छुचिव्रत इत्येतदेव प्र°; च. °नपादेव° च्छुचिव्रत इत्येत. ७ क. ख. ७ ( २२ ); ग. २३ । त्रयोदशे तृतीयः पादः । इति; श्रीजम्बूमार्गाश्रमवासिनं आचार्यभगवद्दुर्गकृतौ ऋज्वर्थायां निरु° ठ. °मिति । इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तटीकायां निरुक्ताध्यायपञ्चकेन सह नैरुक्तत्रयोदशाध्यायः । इति निरु. उत्तरषट्के द्वि० २२ खण्डः समाप्तिमगमत्; घ. ट. ज. झ. अङ्को नास्ति. ८ घ. झ. ट. °इति श्रीनिरुक्त°. ९ ग. 'समाप्तः' नास्ति.

* द्रविणोदाः कस्माद्द्रविणोदा द्रविणसो मेद्यन्तु ते ऽर्थात आप्रियः समिद्धो अद्य तनूनपान्नराशंसस्याजुह्वानः प्राचीनं व्यचस्वतीरा सुष्वयन्ती दैव्या[12] होतारा नो यज्ञं[13] य इमे[14] आविष्ट्यो[15] वनस्पतिरुपावसृजाञ्जन्ति देवेभ्यो वनस्पते वनस्पते रशनया सद्यो जातः प्रयाजान्मे[22] द्वाविंशतिः ॥

इति निरुक्त उत्तरषट्के द्वितीयोऽध्यायः ॥ १

* छ. त. दं. खण्डशाखा नास्ति.

१ क. ध. मैरुक्ते; छ. इति निरुक्ते अष्टमोऽध्यायः; त. द. इत्यष्टमोऽध्यायः समाप्तः; म. अष्टमाध्यायस्य तृतीयः पादः । इत्यष्टमोऽध्यायः समाप्तः; ग. ' इति॰ ध्यायः ' नास्ति.

# अथ नवमाध्यायस्य

## प्रथमः पादः ।

ॐ । अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामस्तेषामश्वः प्रथमागामी भवत्यश्वो व्याख्यातस्तस्यैषा भवति ॥ १ ॥

अथ यानि पृथिव्यायतनानि सत्त्वानीत्येवमादि । 'अथ' इति

पृथिव्यायतनानां सत्त्वानामनुक्रमणम्

विशेषाधिकारे । प्रकृतार्थादनन्तरमधिकरोति । 'पृथिव्यायतनानि' पृथिव्याश्रयाणि 'सत्त्वानि' द्रव्याणि च तेषामप्यत्र विवक्षितत्वात् । 'स्तुतिं लभन्ते इति, समाम्नातानि । 'तान्यतः' परम् 'अनुक्रमिष्यामः' । व्याख्यास्याम इति शेषः । पूर्वस्मादाप्रीगणाद्विलक्षणोऽयमश्वादिगण इति पृथगधिकारवचनम् । पृथिव्यायतनत्वाविशेषात्सर्पलाङ्गलकुसुम्भकप्रभृतीनामप्यत्रैवान्तर्भावः । तान्यपि हि स्तुतिं लभन्ते लक्षणं वेदमिति । तेषां युगपदभिधानासंभवात्क्रमोऽर्थादङ्गीकृतो भवति । सति च क्रमे न मुख्यातिक्रमो न्याय्य इत्यतो ब्रवीति । 'तेषामश्वः प्रथमागामी भवति इति । स पुनः किमर्थः

तेषामश्वः प्रथमः

प्रथमागामी । पुरुषानन्तरं जन्मेति हि विज्ञायते । 'तस्या आहुत्याः पुरुषोऽजायत द्वितीयामजुहोत्ततोऽश्वोऽजायत' ( मैत्रा० सं० १ । ८ । १ ) । विशिष्टे चाश्वमेधलक्षणे कर्मणि विशिष्टोऽस्याङ्गभाव इति । स च पुनरयं 'व्याख्यातः' ।

१ क. ठ. ड. हरिः ओम्; छ. तुं; थ. ॐ ३ म्; ध. हरिः ॐ म्. २ ग. ज. यानि पृथि°. ३ ग. ज. 'म्नातान्यतः प°. ४ च. ज. व्याख्यास्यामे°. ५ क. ख. घ. झ. ट. ठ. ड. कुषुम्भ°; ग. ज. कुशुम्भ°. ६ क. ख. घ. झ. ट. ठ. ड. वेद°, ७ ग. ज. क्रमेण मु°; घ. क्रमेर्णे मु° न. ८ ग. ज. न्याय्य ते तस्या आहुत्याः°. ९ क. ख. किमर्थं. १० क. ख. घ. झ. ट. ठ. ड. °नन्तरं जन्मे°. ११ क. ख. ब. झ. ञ. ठ. ड. °ख्यात एव प्राक्.

'अश्नुते अध्वानं महाशनो भवतीति वा' (निरु० २।२७) इत्यत्र । 'तस्यैषा' प्राधान्यस्तुतिरश्वस्तोमीय एव ॥ १ ॥

---

अश्वो॒ वोळ्हा॑ सु॒खं रथं॑ ह॒स॒नामु॑पम॒न्त्रिणः॑ । शेपो॒ रोम॑ण्वन्तौ भे॒दौ वारिन्म॒ण्डूक॒ इच्छ॒तीन्द्रा॑येन्दो॒ परि॑ स्रव (ऋ० सं० ९।११२।४) ॥ अश्वो वोळ्हा सुखं वोळ्हा रथं[3] वोळ्हा सुखमिति कल्याणनाम कल्याणं पुण्यं सुहितं[4] भवति सुहितं गम्यतीति वा हसैता वा पाता वा पालयिता वा शेपमृच्छतीति वारि वारयति मा नो व्याख्यातस्तस्यैषा भवति॥ २ ॥

मा नो॑ मि॒त्रो वरु॑णो अ॒र्य॒मा॒युरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ ख्यन् । यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि (ऋ० सं० १।१६२।१) ॥ यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे[6] वीर्याणि मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च[7] वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यञ्छकुनिः शक्नोत्युन्नेतुमात्मानं शक्नोति नदितुमिति वा शक्नोति तकितुमिति वा सर्वतः शंकरोऽस्त्विति वा शक्नोतेर्वा तस्यैषा भवति ॥ ३ ॥

मा नो मित्र इति[8] । दीर्घतमस आर्षम् । अश्व एवाहूयतेऽनेन सूक्तेन । अश्वः यद्वाजिन इति । यत् यानि वाजिनः अस्याश्वस्य देवजातस्य देवैर्जनितस्य वसुभिरादित्यात्[9] । 'सूरादश्वं[10] वसवो निरतष्ट' (ऋ० सं० १।१६३।२) इति । अग्नेर्वा

---

१ ग. २; च. 'एवं । मा नो°; ठ. ड. °वति । इति उत्तरषट्के तृतीये अध्याये प्रथमः खण्डः । अश्वो घोळ्हेति महाराष्ट्रपाठः । मा नो°; ड. एव । इति उत्तरषट्के ३ ध्याये १ खण्डः । अश्वो वोळ्हेति महाराष्ट्रवैदिकपाठः । २ । इति उत्तरषट्के तृतीयेऽध्याये २ खण्डः समाप्तः । मा नो°. २ क.ख. छ. त. द. वोल्हा. ३ छ. त. द. 'रथं वोळ्हा' नास्ति. ४ छ. त. द. सुहितं भवति मा नो व्याख्या°; ठ. ड. सहितं. ५ ठ. ड. '२' नास्ति. ६ छ. त. द. 'विदथे° नास्ति. ७ त. वायु° चा; ध. वायु°. ८ ग. इति । दी°. ९ ग. ज. °नितस्य च सुरभिरादि°. १० ग. शूरा° सु; च. ज. शूरा°.

प्रजापतिना। ' द्वितीयामजुहोत्ततोऽश्वोऽजायत ' ( मैत्रा० सं० १।८।१ ) इति। सप्तेः सरणस्य प्रवक्ष्यामः प्रकर्षेण वक्ष्यामः। विदथे एतस्मिन्यज्ञे वीर्याणि गुणान्। किं तेषाम्। मा नः मास्माकं तान्युच्यमानानि मित्रो वरुणः अर्यमा वायुः इन्द्रो मरुतः परिख्यन् मा चक्षीरन्। किं तर्हि। अनुमन्यन्ताम्। ' आयुः ' अत्र ' वायुः अयनो ' वकारलोपेन। स कस्मात्। अयनात्। एति ह्यसौ विश्वम्। इन्द्र ऋभुक्षाः। स हि उरुक्षयणः। उरावन्तरिक्षे क्षियति निवसति। अथवा। क्षियतिरैश्वर्यार्थः। कस्येष्टे। ' ऋभूणां ' देवानां ' राजेति ' च तेषामीष्टे। एवमृभुशब्दात्पूर्वपदं क्षियतेरैश्वर्यकर्मण उत्तरपदम्।

' शकुनिः ' ( निघ० ५।३।२ ) कस्मात्। स हि ' शक्नोत्युन्नेतुमात्मानम् '। ऊर्ध्वं नेतुं लघुत्वात्। शकेः पूर्वपदं नयतेरुत्पूर्वस्योत्तरपदम्। अथवा।

शकुनिः कस्मात् नदतस्तकतेर्वा शब्दार्थगत्यर्थयोर्वोत्तरपदं विकल्पेन। अथ ' वा '। ' सर्वतः शंकरः ' अयमस्माकम् ' अस्त्विति ' सर्वेण नित्यमाशासितव्यो भवति। एवं सति ' शम् ' इति सुखनाम पूर्वपदं करोतेरुत्तरपदम्। ' शक्नोतेः ' एव वैकस्मात्। किमसौ शक्नोति। यदस्य योग्यं शक्तिुम्। ' तस्यैषा ' प्राधान्यस्तुतिः ' भवति '॥ ३ ॥

**कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम्। सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ( ऋ० सं० २।४२।१ )॥ न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाचमीरयितेव नावं सुमङ्गलश्च शकुने भव कल्याणमङ्गलो मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वाङ्गलमङ्गवन्मज्जयति पापकमिति नैरुक्ता मां गच्छत्विति वा मा च त्वा काचिदभिभूतिः सर्वतो विदद्गुरुसमदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे तदभिवादिन्येषग्भवति ॥ ४ ॥**

१ ग. ज. मा च परिचक्षीरन्. २ ग. ज. °भुक्षा स्म ह्युरु°. च. °भुक्षा स्मं ह्यु रु° स ३ ग. ज. यर्थि।क°. ४ ग. ज. °यतिरै°. ५ ह. °वति। इति निरुक्तमुत्तरषट्के द्वि० तृतीयः खण्डः; ह. °वति। इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये तृतीयः
२१ खण्डः. ६ क ख. घ. ठ. ठ. मा.

कनिक्रदज्जनुषं प्रब्रुवाण इति । गृत्समदस्यार्षम् । शकुनिरुतश्रवणे जपे विनियोगः ( आश्व० गृ० ३ । १० । ९ ) । कनिक्रदत् न्यक्रन्दीत् । पुनःपुनः[1] भृशं वा क्रन्दसीति मध्यमपुरुषेण नुतिरुत्तरमर्धर्चमपेक्ष्य । जनुषं प्रब्रुवाणः आत्मनोऽभिजातिं कथयन्निव इयर्ति वाचम् इयर्षि वाचम् । कथमीरयसि[3] । नाविक इव पुनःपुनः नावं पारगमनाय । यस्त्वमेवमीरयसि स त्वं सुमङ्गलश्च हे शकुने प्रशस्तमङ्गलः अस्माकं भव । वयमपि च तुभ्यमित्याशास्महे । मा त्वा काचिदभिभा अभिभूतिः परोपद्रवः विश्व्या सर्वप्रकारा सर्वतो विदत् विदत्विति । ' यथास्य शब्दस्तथा नाम ' इति । तदिदं शकुनिषु बहुलमित्यत्रोक्तम् ( निरु० ३ । १८ ) ।

शकुनिः

प्रायः शकुनिषु शब्दमूलानि नामधेयानि

' मङ्गलं ' कस्मात् । ' गिरतेः ' धातोः ' गृणात्यर्थे ' वर्तमानस्य । स्तुत्यं हि तद्भवति । ' गिरत्यनर्थानिति वा ' । अस्यैव[4] वा गिलनार्थस्य । किमिदं गिलति । उत्पद्यमानमेवेदमनर्थान् गिलति[5] भक्षयति । वा[6] ' अङ्गलम् ' एतन्मकारोपजनेन मङ्गलम् । कोऽर्थः । ' अङ्गवत्[7] ' । अङ्गैरवयवैर्दधिमध्वक्षतादिभिस्तद्वत् । रो मत्वर्थे । व्यत्ययश्च रलोः[8] । अथवा । मज्जयतेर्मङ्गलम् । किं ' मज्जयति । पापकमिति नैरुक्ताः ' । उत्पद्यमानमेवैतन्मङ्गलिनः पुरुषस्य मज्जयति नाशयति यदस्य किंचित्पातकं भवति । एवं मज्जयतेर्मङ्गलमिति[10] नैरुक्ता विदुः । ' मां गच्छत्विति वा '[11] । गमेर्वा । सर्वं एतन्मन्यते मामेतद्गच्छत्विति । ' गृत्समदमर्थमभ्युत्थितम् ' इति स्तुतिलाभकारणम् ।

मङ्गलं कस्मात्

स किल कंचिदर्थं सिसाधयिषुरभ्युत्तस्थौ । तमभ्युत्थितं ' कपिञ्जलः ' शकुनः ' अभिवाशे ' तत्सिद्धिमावेदयत्[12] । यथा चैतदेवं ' तदभिवादिन्येषगर्भ वाति '[13] ॥ ४ ॥

गृत्समदं कपिञ्जलोऽभ्युत्थितमर्थं स्वरुतेन दर्शयामास

१ ग. हरि गृ°. २ ग. च. 'पुनः' सकृदेव. ३ क. ग. घ. झ. ट. ठ. ड. कथम् । ईरयितेव । ना°; च. कथमीरयसि° तेव. ४ च. अस्यैव. ५ च. लियति° गिल. ६ क. ख. घ. झ. ट. ठ. ड. °यति वा । अथवा । अङ्ग°; । च. °यति वा अङ्गल° अथवा. ७ क. ख. घ. झ. ठ. ठ. ड अङ्गवत्. ८ ग. ज. 'रलोः' नास्ति. ९ ग. ज. °त्पाद्य°. १० ग. ज. °यति । म°; च. °यति मं° तेर्म. ११ ठ. ड. मा. १२ क. ख. °दयत्; च. °दयत्° त्. १३ ठ. ड. °वाति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये चतुर्थः खण्ड. ( ठ. निरु० उत्त० त्रि० खण्ड० ).

**भद्रं वद दक्षिणतो भद्रमुत्तरतो वद। भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ( खैलिके सूक्ते ३ । १ ) ॥ इति सा निगदव्याख्याता गृत्समदो गृत्सो मदनो गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणो मण्डूका मज्जूका मज्जनान्मदतेर्वा मोदतिकर्मणो मन्दतेर्वा तृप्तिकर्मणो मण्डयतेरिति वैयाकरणा मण्ड एषामोक इति वा मण्डो मदेर्वा मुदेर्वा तेषामेषा भवति ॥ ५ ॥**

भद्रं वद दक्षिणत इति । इह शकुनिः किल कस्यांचिद्दिशि साधुर्भवति । कस्यांचिदसाधुः । स एष ब्रवीति । दक्षिणतः उत्तरतः पश्चात् पुरस्ताच्च सर्वत एव

कपिञ्जलः

त्वमस्माकं कपिञ्जल भद्रं वदेति । ' गृत्समदो गृत्सो मदनः ' । गृत्सश्चासौ मदनश्च गृत्समदनः । गृत्सो मेधावी मदनो हर्षोल्लैः ।

' मण्डूकाः ' (३) इत्येतत्पदं वक्तव्यम् । य एते ' मण्डूकाः ' एते ' मज्जूकाः ' । कस्मात् । ' मज्जनात् ' । नित्यमग्ना ह्येत उदके । ' मदतेर्वा ' स्यात्

मण्डूकाः कस्मात्

' मोदतिकर्मणः ' । नित्यप्रमुदिता हि ते । ' मन्दतेर्वा स्यात् तृप्तिकर्मणः ' । नित्यतृप्ता हि ते प्रचुरोदकत्वात् । ' मण्डयतेरिति वैयाकरणाः ' । ते हि भक्तिभिर्नानाचित्राभिर्विचित्रा मण्डिता भवन्ति । ' मण्ड एषामोक इति वा ' । मण्डे उदके एषामोको निवास इति[६] वा मण्डूकाः । ' तेषामेषा भवति ' ॥ ५ ॥

---

**संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ( ऋ० सं० ७ । १०३ । १ ) ॥ संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणो ब्रुवाणा अपि वोपमार्थे स्याद्ब्राह्मणा इव व्रतचारिण इति वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूका वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्त स मण्डूकाननुमोदमानान्दृष्ट्वा तुष्टाव तदभिवादिन्येषर्ग्भवति ॥ ६ ॥**

---

१ ङ. थ. ध. पश्चात्कपिञ्जल. २ क. ख. ङ. थ. ध. ठ. ड. गृत्समदनो. ३ ग. इति ; थ. झ. ट. इति । इति सा निगदव्याख्याता । इह ; च. इति । इह इति सा निगदव्याख्याता; ठ. ड. णतो वदेति. ४ ट. हर्षोल्लः. ५ ग. अ. मोदनक. ६ ठ. ङ. वति । इति निरुक्तटीकायां भास्करकृते तृतीयेऽध्याये ( ठ. निरुक्त० उत्त० तृ० अध्या० ) पञ्चमः खण्डः.

संवत्सरं शशयाना इति । वसिष्ठस्यार्षम् । संवत्सरं शिश्याना: निर्व्यथः संवत्सरं सुप्ता इव स्थित्वा ब्राह्मणाः

मण्डूकाः

ब्रुवाणाः सन्तो वक्तुं व्रतचारिणः कृतवाक्संयमाः ततः प्रावृट्काले प्राप्ते निवृत्ताः पर्जन्येन तर्पितां वाचं प्रमण्डूका अवादिषुः प्रावादिषुर्मण्डूकाः । अथवा । न युक्तो रूढिपरिबाधो ब्राह्मणशब्दस्येति लुप्तोपमः प्रकल्प्यते[2] 'ब्राह्मणा इव व्रतचारिणः' इति । यथा ब्राह्मणा उपाकृत्य प्रावृषि पवित्रपाणयो मन्त्रलिनो नियतकालास्तां[3] वैदिकीं वाचं वदन्त्येवं प्रावादिषुरिति ।

'वसिष्ठो वर्षकामः' इति स्तुतिलाभनिमित्तम् । स किल वर्षन्तं पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त स्तुहि स्तुहीति । 'स' तान् अनुमोदमानान् वाच्यमानान् दृष्ट्वा लब्धं वर्षनिमित्तमिति परितुष्टस्तानेव 'तुष्टाव' । यथा चैतदेवं 'तदभिवादिन्येषर्ग्भवति'[4] ॥६॥

वसिष्ठो वर्षकामो मण्डूकांस्तुष्टाव

उप प्रवद[5] मण्डूकि वर्षमा वद तादुरि । मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः ( खैलिकं सूक्तं १६ ) ॥ इति सा निगदव्याख्यातास्ता अश्नुवत एनानिति वान्यश्नुवत एभिरिति वा । तेषामेषा भवति ॥ ७ ॥

---

उप प्रवद[6] मण्डूकि मण्डूकानां मातः । अथवा । मण्डूकपते मण्डूकि[7] । माम् उप गम्य प्रकर्षेण वद । कथं च प्रवद । वर्षम् आभिमुख्येन वद । तादुरि तरणशीले । अथवा । तावद्दुरि । यावच्छरीरं तावदेवोदरं तस्याः । ततो वृष्टे देवे आप्लुते उदकेनैतस्मिन्नेकजलीभूते मध्ये ह्रदस्य उदकस्य बहुनः प्लवस्व उपरि विगृह्य प्रसार्य एनांश्चतुरः पदः । पादानित्यर्थः । पादस्य पदादेशः क्रियते ।

वसिष्ठो मण्डूकीमुत्तेजयति

१ ग इति । व°. २ ग. च.ज. प्रकल्पते. ३ ग. ज. °कालाभावे; च. °कालीभावे° लाः तां. ४ ठ. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्कस्य तृतीयाध्याये ( ड. भाष्ये ३ ध्याये ) षष्ठः खण्डः. ५ क. ख. त. प्रवद; ड. उपप्रवद. ६ क. ख. घ. झ. ट. ठ. ड. प्रवद; घ. ज. झ. ट. सर्वा ऋक्पाठ्या. ७ ग. मण्डूकि ० मण्डूकीनां मा°; च. मण्डूकि० मण्डू हे मण्डूकि; ट. ड. मण्डूकीति. ८ ग. च. ज. एतञ्च°. ९ क. ख. पदा°; च. पदा° पा. १० क. ख. ङ. ट. ठ. ड पादशब्दस्य; च. पादस्य शब्द.

अक्षशब्दस्य व्युत्पत्तिः

' अक्षाः ' इत्येवमादीनि लब्धस्तुतित्वात्पृथिव्यायतनवत्त्वसामान्यादिह वर्गे समाम्नातानि। तेषां च यथासमाम्नातमेव 'अक्षाः'(४) प्रथमं निर्वक्तव्याः। ते कस्मात्। ' अश्नुवत एनानिति वा। दीव्यन्तः कितवा एतानक्षान्पाणिभिः अश्नुवते व्यापयन्ति। त एते अश्नोतेः कर्मणि कारके। अथवा। ' अभ्यश्नुवते '। अभिपूर्वस्य तस्यैवाश्नोतेः करणे कारके। तैर्हि कितवाः प्रतिकितवं धनमभ्यश्नुवते। ' तेषामेषा भवति ' स्तुतिः॥७॥

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः। सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ( ऋ० सं० १०। ३४। १ )॥ प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षः। मौजवतो मूजवति जातो मूजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपीतरेषीकैतस्मादेव विभीदको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्प्रशंसत्येनान्प्रथमया निन्दत्युत्तराभिर्ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा तेषामेषा भवति॥ ८॥

---

अक्षाः

प्राविपा मेति। अक्षपुत्रस्य मौजवत आर्षम्। प्रावेपाः प्रवेपिणः प्रकर्षेण वेपनशीलस्य वृक्षस्य जाता महतो मां मादयन्ति हर्षयन्ति वा तर्पयन्ति वा। प्रवातेजाः प्रचुरवाते स्थाने काले जाताः प्रावृट्काले। पक्वानां वा प्रचुरवाते काले पतनाभिप्रायं जन्म। विभीदक एक एव वा विशेष्यते। यः प्रवणे उदकबहुले देशे जातस्तस्य फलानि अक्षाः। इरिणे वर्वृतानाः। निर्ग-

१ ग. च. ज. अभ्यश्नु°. २ ठ. ड. °स्तुतिः। इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये ( ठ. निरुक्त० उत्त० तृ०ध्या० ) सप्तमः खण्डः. ३ छ त. प्रवतेजा. ४ छ. त. द. द्युतस्यै°. ५ ग. °मेति° । अ°. ६ ग. ज. °नां वाते काले°. ७ ग. च. ज. ट. विर्मा°.

तैर्णे[1] आस्फुरक[2]स्थाने वर्तमानाः । न हि तत्र पुत्रपौत्रानुक्रमृणं भवति । 'अपार्णं' वा । उपसर्गस्यान्यत्वमेव केवलम् । अथवा । अपार्णम् अपगतोदकम् । 'अपरता ओषधय इति वा' । अपेत्य तस्मादन्यत्र ओषधय इति । कथं मादयन्ति । सोमस्येव । यथा सोमस्य मौजवतस्य भक्षो यजमानं मादयति हर्षयति तर्पयति तथा । विभीदको[3] विभेत्ता[4] कोष्ठस्य जागृविः जागरणकर्ता । यो जयति स हर्षेण[5] जागर्ति योऽपि जीयते स दुःखेन जागर्ति । स एष विभीदक एवंप्रकारो मह्यम् अर्चिच्छदत्[6] । स्वेन फलशब्देन सर्वार्थेषु पुनःपुनः भृशं वा मनश्छादयित्वा देवने एवैकस्मिन्मम मनः उत्साहयति ।

**कथं सोमः मौजवतः**

मौजवतः सोमः । स कस्मात् । 'मूजवति जातः' । अथ 'मूजवान्' कः । 'पर्वतः' । स कस्मात् । 'मुञ्जवान्' । मुञ्जैस्तद्वान् । अथ 'मुञ्जः' कस्मात् । स हि 'विमुच्यते इषीकया' । अथ 'इषीका' कस्मात् । 'इषेर्गतिकर्मणः' । सा हि निर्गता भवति मुञ्जात् । 'इयमपीतरेषीकैतस्मादेव' । या हल्पा अन्या सा । सापि हि निर्गता भवति ।

**ग्रावाणः कस्मात्**

'ग्रावाणः' कस्मात् । 'हन्तेर्वा' । तदर्थोपपत्तेः । वर्णव्यापत्त्युपजनाभ्याम् । 'गृणातेर्वा' स्तुत्यर्थस्य । स्तूयन्ते हि ते । 'गृह्णातेर्वा' । गृह्यन्ते हि ते । 'तेषामेषा' स्तुतिः 'भवति'[7] ॥ ८ ॥

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः
(ऋ० सं० १०।९४।१)॥ प्रवदन्त्वेते प्रवदाम वयं ग्रावभ्यो वाचं

१ ग. ज. निर्गत आस्फु°. २ घ. झ. ट. ठ. ड. आस्फार°; च. आस्फोर° स्फा. ३ ग. च. ज. विभी°. ४ ग. च. ज. विभे°. ५ ग. यजति महद्धर्षेण; च. यजति मैं (स) हद्धर्षेण; ज. यजति स हद्धर्षेण. ६ च. अविच्छ°. ७ ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये (स. निरु० टी० उत्त० तृ० अ०) अष्टमः खण्डः; क. ग. घ. पर्यायेष्वयं खण्डो नास्ति.

**वदत वदद्भ्यो यदद्रयः पर्वता आदरणीयाः सह सोममाशवः क्षिप्रकारिणः श्लोकः शृणोतेर्घोषो घुष्यतेः सोमिनो यूयं स्थेति वा सोमिनो गृहेष्विति वा येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रस्तस्यैषा भवति ॥ ९ ॥**

प्रैते वदन्त्विति। अर्बुदस्येयमार्षम्। यस्मात्ते अद्रयः आदरणीया आदरणार्हाः पर्ववन्तः साकमाशवः सहभूताः सोममश्नीथ अभिषुणुथ। तं[5] चाभिषुण्वन्त इन्द्राय श्लोकं श्रवणीयं हृद्यं घोषं शब्दं भरथ धारयथ निर्वर्तयथ। ये ते यूयम् अमुना प्रकारेण यस्मात् सोमिनो भवथ। अथवा। सोमिनः सोमेन तद्वतो यजमानस्य गृहेषु एवं कुरुध्वे तस्माद्युष्मानधिकृत्य ब्रवीमि प्रैते वदन्तु युष्मदर्थं स्तुतीरुद्गातारः। प्रवदाम[6] वयं होतारः। अध्वर्यूनपि च ब्रूमहे। एभ्यो ग्रावभ्यो वाचं वदद्भ्यो वदत वाचं या वक्तव्या एतान्प्रतीति।

ग्रावाणः

'नाराशंसः' ( ६ ) इति समाम्नातः। कः पुनरेष नराशंसः। 'येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः'। किमत्र मन्त्रः स्तूयते। न इत्युच्यते। लक्षणं मन्त्रः। नराः स्तूयन्ते। एवं तर्हि नराणामेव समाम्नानं प्राप्तमासीत्। न। तेषां सामान्यस्तुत्यभावाद्राज्ञां च स्तुत्युपपत्तेः। तेषामपि च सामान्या स्तुतिर्नास्ति। अस्ति त्वैकैकश्येन केषांचित्। यतो भावयव्यं लक्षणीकृत्य नाराशंसो मन्त्र उदाह्रियते। 'तस्य' नराशंसस्य मन्त्रस्योदाहरणम्। 'तस्य' वा भावयव्यस्य प्राधान्यस्तुतिः 'एषा' ऋग् 'भवति' ॥ ९[11] ॥

नाराशंसो मन्त्रः। तथापि न मन्त्रः स्तूयते किंतु नराः। तेष्वपि च केचिद्राजान एव स्तूयन्ते

१ क. ख. ङ. थ. घ. ठ. ड. अद्र°. २ ग. °न्त्विवाते। अ°. ३ क. ख. ग. ज. अद्र°; च. अद्र° आ. ४ क. ख. घ. झ. ट. ठ. ड. पर्वताः पर्ववन्तः; च. °र्हाः ˇ पर्व° पर्वताः. ५ क. ख. घ. झ. ट. ठ. ड. त तं; च. °णुथ। ˇ तं° ते. ६ क. ख. घ. झ. ठ. ठ. ड. °दाम च व° ७ क. ख. ग. ज. ठ. ड. नरा°. ८ ग. ज. °म्नातं; च. °म्नातं प्रा° नं. ९ क. ख. ग. च. ज. त्वेकै° १० ग. ज. नरा°; च. नैरा° ना. ११ ठ. ड. °वति। इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये ( ठ. निरुक्त०उ० तृतीयाध्या० ) नवमः खण्डः.

अमन्दान्त्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य। यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ( ऋ० सं० १।१२६।१ ) अमन्दान्त्स्तोमानबालिशाननल्पान्वा बालो बलवर्ती भर्तव्यो भवत्यर्थास्मा अलं भवतीति वाऽस्मै बलं भवतीति वा बलो वा प्रतिषेधव्यवहितः प्रभरे मनीषया मनस ईषया स्तुत्या प्रज्ञया वा सिन्धावधि निवसतो भावयव्यस्य राज्ञो यो मे सहस्रं निरमिमीत सवानतूर्तो राजातूर्ण इति वात्वरमाण इति वा प्रशंसामिच्छमानः ॥ १० ॥

इति नवमाध्यायस्य प्रथमः पादः ॥

अमन्दान्त्स्तोमानिति । दानपरितुष्टः कक्षीवान् ब्रवीति । अमन्दान् अबालिशान् अनल्पान्वा अबालिशये.ग्यान् प्रभरे उच्चारये मनीषा स्तुत्या प्रज्ञया वा । कस्य । भावयव्यस्य । भावेनवासावार्जवेनैव सर्वार्थान् यवतीति मिश्रयतीति अनुतिष्ठतीति भावयव्यः । क निवसतः । सिन्धावधिक्षियतः निवसतः । यः किमकरोत् । यो मे सहस्रं बहून् सवान् यज्ञान् निरमिमीत निर्मितवान् । बहूनां यज्ञानां यागोपकरणं दत्तवान् । अतूर्तः अतूर्णः अचपलः अत्वरमाणः । क्रमेण यो निरमिमीत सहस्रं मम सवान् प्रशंसामिच्छमानः अमन्दान् स्तोमान् तस्मै भावयव्याय राज्ञे प्रभरेऽहमिति ॥ १० ॥

राज्ञो भाव्यस्य स्तुतिः

चतुर्दशाध्यायस्य प्रथमः पादः ।

१ छ. त. द. बलभर्ता. २ ङ. थ. ध. छ. त. द. राजातूर्ण°. ३ ङ. थ. ध. छ. त. द. वा त्व°. ४ ङ. थ. ध. 'इति पाद' नास्ति; छ. प्रथमः पादः; त. नवमेऽध्याये प्रथ°; द. इति नैरुक्ते उत्तरार्धस्य प्रथमः पादः. ५ ग. °मिति । दा°. ६ ग. °तुष्टवः क ; च. तुष्टाविः क° ष्टः; ज. तुष्टावः. ७ क. ख. घ. झ. ट. ठ. ड. °भरे प्रहरे उ°. च. °भरे ~ उ° प्रहरे. ८ च. न्यत्र ण्ति य. ९ क. ख. घ. ट. ठ ड. °सवान् अत्र: प्रशं°; च. सवान्॰ प्र° अत्र: १० ठ ड. °वति । इति चतुर्दशाध्यायस्य प्रथमः पादः । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये दशमः खण्डः; क. ख. च वर्जमितरत्राग्रो नास्ति.

द्वितीयः पादः ।

**यज्ञसंयोगाद्राजा स्तुतिं लभेत राजसंयोगाद्युद्धोपकरणानि तेषां रथः प्रथमागामी भवति रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा स्याद्विपरीतस्य रममाणो[२]ऽस्मिंस्तिष्ठतीति वा रपतेर्वा [१]रसतेर्वा तस्यैषा भवति ॥ ११ ॥**

राजा यज्ञसंबन्धात् स्तुतिं लभते

'यज्ञसंयोगाद्राजा स्तुतिं लभेत' इत्येवमादि । [३]तत्पूर्वप्रकृतस्यैव भावयव्यस्य स्तुतिलाभनिमित्तमेव मन्त्रगतमनूद्यते । यस्मात्सहस्रं सवान्निरमिमीत तस्मात्प्रभर इति केचिन्मन्यन्ते । अपरे पुनर्युद्धोपकरणानामुत्तरेषां सामान्यमेतत्स्तुतिलाभनिमित्तमिति वर्णयन्ति । तत्कथमिति । अश्वमेधे हि 'जीमूतस्येव भवति प्रतीकम्' ( ऋ० सं० । ६ । ७५ । १ ) इत्यनेन सर्वयुद्धोपकरणोपेतं रथमधिरूढः सन्नद्धकवचो राजा स्तूयते ( मैत्रा० सं० ३ । १६ । ३ ) । स कस्मादित्युपोद्धत्योच्यते । 'यज्ञसंयोगाद्राजा स्तुतिं [४]लभेत' । स तावद्यज्ञसंयोगात्स्तुतिं लभते ।

युद्धोपकरणानि राजसंबन्धात्स्तूयन्ते

अथ पुनर्युद्धोपकरणानि किमिति स्तुतिं लभन्त इति । 'राजसंयोगाद्युद्धोपकरणानि' । युद्धायोपक्रियन्त इति युद्धोपकरणानि । युद्धे वोपकुर्वन्तीति युद्धोपकरणानि । स एष हि व्यापी स्तुतिसंक्रमन्याय आचा[५]र्येणोपप्रदर्शितः । तद्यथा । युद्धोपकरणानि राजसंयोगात्स्तुतिं लभन्ते । तस्य तान्यङ्गानीति तत्संबन्धात्स्तूयन्ते । राजापि यज्ञसंयोगाद्यज्ञोऽपि देवतासंबन्धाद्देवता अध्यात्मसंबन्धात् । सोऽयमध्यात्मेवाङ्गप्रत्यङ्गभावेनावस्थितः सर्वावस्थ[६]ातः स्तूयत इत्यात्मस्तुतिरेवेयं सर्वा । तदुक्तम् । 'स्थाने स्थाने स्तुतिः सर्वा स्थानाधिपतिभागिनी । आत्मप्रतिष्ठा बोद्धव्या तथोपकरणस्तुतिः' ॥ इति । एष स्तुतिसंक्रमन्यायः सर्वत्रोपसंधेयः ॥

१ छ. त. द 'रसतेर्वा' नास्ति. २ क. ख. ४ ( ११ ), त द. १. ३ क. ख. घ. झ. ट. ठ. ड. तदेनत्पू ; च. तत्पू इ. ४ ग च. ज. लभते. ५ ग. ञ. °र्येनवात्मे° ; च. °मेवात्मे' वमा ६ ग. ज. ञ. झ. ट. ठ. ड. °वस्थः स्तू ; च. °वस्थातः° स्थः.

' तेषां रथः ( ७ ) प्रथमगामी भवति ' । स कस्मात् । तदाधारत्वादितरेषां युद्धोपकरणानाम् । ' रथः ' कस्मात् । ' रंहतेर्गतिकर्मणः ' । तस्य हि तदर्थेनोत्पत्तिः । ' स्थिरतेर्वा स्याद्विपरीतस्य ' । स्थिरः सन् रथ इत्युक्तः । तत्र हि स्थिरसुप्रतिष्ठितो योद्धा भवति न तथाश्वादिषु । ' तस्यैषा भवति ' स्तुतिः ॥ ११ ॥

**वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ( ऋ० सं० ६ । ४७ । २६ ) ॥ वनस्पते दृढाङ्गो हि भवास्मत्सखा प्रतरणः सुवीरः कल्याणवीरो गोभिः संनद्धो असि वीळयस्वेति संस्तम्भस्वास्थाता ते जयतु जेतव्यानि दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणस्तस्यैषा भवति ॥ १२ ॥**

---

वनस्पते वीड्वङ्ग इति । गर्गस्यार्षम् । हे वनस्पते वानस्पत्य रथ

रथः

त्वमुच्यसे । वीड्वङ्गो दृढाङ्गो भव । ततश्च अस्मत्सखा अस्मन्मित्रं प्रतरणः प्रतारणः संग्रामाणां पारं नेता सुवीरः कल्याणवीरः अविक्लवानवखण्डिताधिष्ठाता भव । किंच । कृतप्रतीकारैस्त्वमस्माभिः गोभिः असि संनद्धः समन्ततो नद्धो बद्धो गव्येन चर्मणा श्लेष्मणा च । स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं वीळयस्व संस्तम्भुहि । संस्तब्धे च त्वय्यवस्थितः आस्थाता ते अधिष्ठाता तव योद्धा यानि तेन जेतव्यानि आत्मनोऽभीप्सितानि तानि सर्वाणि जयतु ।

१ च. °वोपपत्तिः २ क. ख. २ ( ११ ); ठ. ड° स्तुतिः । इति नि ( ड. ने ) रुक्तटीकायामुत्तरषट्के तृतीयाध्याये ( ठ. नि ० उ० तृ० ध्या० ) एकादशः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. छ. त. द. वीलय°. ४ छ. त. द दृल्हाङ्गो. ५ छ. त. द. स्याद्वधकर्मण°. ६ क. ख. २ ( १२ ); त. द. २. ७ ग. इति । ग°. ८ ग. ज. अस्मिन्मित्रं. ९ ग. ज. अविक्लवा°; घ. अविक्लवा° कृ. १० ग. ज. °कारस्त्वम°. ११ ग. च. ज. संबद्धः. १२ च. नद्धो ग° बद्धो.

'दुन्दुभिः' (८) इत्यस्य योऽभिधेयस्तस्य 'शब्दानुकरणम्' आत्मनो

दुन्दुभिः कस्मात्

नामधेयप्रतिलम्भनिमित्तम् । यथेवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य नाम । 'द्रुमो भिन्न इति वा' । द्रुमशब्दात्पूर्वपदं भिदेरुत्तरपदम् । तत्संभवो ह्यसौ द्रुमैकदेशो निष्कुषितश्चर्मणा पिनद्धः । 'तस्यैषा भवति' ॥ १२ ॥

**उप॑ श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तं॒ जग॑त् । स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑ सेध॒ शत्रू॑न् ( ऋ० सं० ६ । ४७ । २९ )॥ उप श्वासय पृथिवीं च दिवं च बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत्स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च दूराद्दूरतरमप सेध शत्रूनिषुधिरिषूणां निधानं तस्यैषा भवति ॥ १३ ॥**

'उपश्वासय पृथिवीमि'ति । अत आरभ्य सर्वा एता युद्धोपकरणा ऋचः ।

दुन्दुभिः

भारद्वाजस्यार्षम् । हे दुन्दुभे उपश्वासय उपशब्दय आपूरय शब्देन एतां चैव पृथिवीं कृत्स्नाम् । उत द्याम् । अपि चैकस्यापि सतस्तव पुरुत्रा बहुत्वे वर्तमानस्य मनुतां मन्यतां घोषं यच्चेदं विष्ठितं जङ्गमं यच्चेदं स्थावरं च । यस्यैवं तव सामर्थ्यं द्यावापृथिव्यावापूरयितुं स त्वं दुन्दुभे सजूः सहजोषणः सहप्रीतिः इन्द्रेण चान्यैः च देवैः दूराद् दूरतरम् अपसेध अपकालय अपुनरागमनायास्मच्छत्रानित्येतदाशास्महे ।

१ क. ख. २ (१२); ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये ( ठ. निरु० उ० तृ० ) द्वादशः खण्डः ( ठ. खण्डः । १२ । ); घ. झ. ट. अ. अङ्को नास्ति. २ क. ख. ३ ( १३ ); ठ. ड. ३. ३ ग. °मिति । अ°. ४ घ. झ. ट. ठ. ड भर°. ५ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ६ क. ख. विष्ठितं स्थावरं यच्चेदं जङ्गमं च'; ट. विष्ठितं यैज्जङ्गमं; ठ. ड. विष्ठितं यज्जङ्गमं. ७ ख. चान्यै'. ८ घ. झ. ठ ड. अपगमय; च. 'अपकालय' नास्ति, ड °सेध अपगमयाप' काल. ९ क. ख. घ. झ. ट. ठ. ड. °स्महे त्वत्तः । इ°.

इषुधिः कस्मात्

'इषुधिः' (९) इषूणां निधानं तूणः । तस्मिन्निषवो निधीयन्ते । 'तस्यैषा भवति' ॥ १३ ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ( ऋ० सं० ६ । ७५ । ५ ) ॥ बह्वीनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य प्रस्मयत इवापाव्रियमाणः शब्दानुकरणं वा सङ्काः सचतेः संपूर्वाद्वा किरतेः पृष्ठे निनद्धो जयति प्रसूत इति व्याख्यातं हस्तघ्नो हन्ते हन्यते तस्यैषा भवति ॥ १४ ॥

इषुधिः

बह्वीनां पितेति । योऽयमिषुधिः बह्वीनां बहूनामिषूणां पाता रक्षिता तदर्थत्वात् । यस्य चेषुधेः बहुः इषुकलापः पुत्रः पुरुणो बहुनः पापात् त्राता । तदर्थं ह्यसौ रक्ष्यत इत्येवं व्युत्पाद्यम् । यश्चायं चिश्चाकृणोति । प्रस्मयत इव अपाव्रियमाणः । प्रकर्षेण स्मयत इव उद्घाटयमानश्चित्रपुङ्खत्वात् । अथवा । हसतीव शोभया पुङ्खदीप्त्या । अस्मिन्पक्षे चिश्चतिरपठितोऽपि धातुः कल्प्यत इति । 'विकारपक्षेषु तदर्थान्यधातूपादानम्' इत्याचार्यपरिभाषा । अथ 'वा शब्दानुकरणम्' । चिश्चिदित्येवं शब्दं करोति । कदा । समना संग्राममवगत्य प्राप्य । स एव इषुधिः सङ्काः संकटान् संपृक्तान् वा संग्रामान् पृतनाश्च सर्वाः याः स्पर्धमानैरिषव एव केवलमभिच्छेद्य क्षिप्यन्ते पताकार्थं तानेवंविधान्संग्रामान् पृष्ठे रथस्य मनुष्यस्य वा निबद्धो[10] जयति प्रसूतः क्षिप्तो धनुष्मतेत्येतदाशास्महे ।

१ क. ख. ३ (१३); ठ. °वति' इति निरु० उ० नृ० ध्या० १३ खण्डः; ड. °वति। इति निरुक्तटीकायां १३ खण्डः। त्रयोदशः खण्डः. २ क. ख. ङ. थ. घ. ठ. ड बहूनां. ३ छ. द. इवावध्रीय°; त. इवावध्रीय° ।घ्रि. ४ क. ख. ४ (१४); त. द. ४. ५ ग. °तेति । यो°. ६ ग. ज. अपध्रिय°; च. आपध्रिय°. ७ घ. ङ. ठ. ड. अस्मिन्नर्थे चि°; ग. ज. अस्मिन्पक्षेऽर्थे चि°. ८ ग. ज. सङ्काः सङ्कयन् संपृक्तासंग्रामात्पृत°. ९ च. °लक्ष्यः. १० क. ख. थ. ङ. ठ. निनद्धो.

' हस्तघ्नः ' (१०) कलापीपदको[1] गोधेति च यमाहुः । स कस्मात् ।

हस्तघ्नः कस्मात्

' हस्ते ' ह्यवस्थितोऽसौ ज्यया ' हन्यते ' । ' तस्यैषा भवति '[2] ॥ १४ ॥

**अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ( ऋ० सं० ६ । ७५ । १४ ) ॥ अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान् पुरुमना भवति पुंसतेर्वाभीशवो व्याख्याताास्तेषामेषा भवति[3] ॥ १५ ॥**

अहिरिव भोगैरिति[4] । योऽयम् अहिरिव भोगैः सर्प इव कुटिलभावैः

हस्तघ्नः

सर्पग्राहकस्य बाहुं सर्पेणेव पर्येति परिवेष्टयति बाहुं धनुष्मतः पुरुषस्य । ज्याया हेतिं परिबाधमानः । ज्याया वधात्[5] सर्वतस्त्रायमाणस्तदर्थत्वात्तस्य । सोऽयमेवंधर्मा हस्तघ्नः पुमानिव पुरुमना इव कश्चिदाप्तः प्रज्ञा[6]बहुलः पुमांसम्[7] एतं धनुष्मन्तं परिपातु विश्वतः सर्वप्रकारं सर्वतः पात्विल्येतदाशास्महे । स्त्रियमपेक्ष्यामनस्कां पुरुषे बहुतरं मनः । ' पुंसतेर्वा ' पौरुषार्थस्य पौंस्यमिति यस्य बलनाम भवति ।

' अभीशवः ' (११) इति वक्तव्यम् । ते पुनरमी ' व्याख्याताः ' अभिधानतोऽभिधेयतश्च ' अभीषवोऽभ्यश्नुवते ' ( निरु० ३ । ९ ) इति । ' तेषामेषा भवति ' ॥ १५ ॥

१ च. कलावीयदृकः; झ. कलापापदकः. २ क. ख. ४ ( १४ ); ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये १४ खण्डः. ३ क. ख. ५ । १५; त. द. ५. ४ ग. °रिति । यो°. ५ क. ख. घ. झ. ट. ठ. ड. वधात् ज्याघातात् बाहुं सर्व°. ६ क. ख. घ. झ. ट. ठ. ड. प्रज्ञानव°. ७ च. पुरुमांस°. ८ क. ख. घ. झ. ट. ठ. पुरु°. ९ क. ख. ५ ( १५ ); ठ. ड. °वति । इति निरुक्तभाष्ये ( ठ. °भाष्ये उ० ) ३ ध्याये पञ्चदशः ( ठ. १५ ).

**रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ( ऋ० सं० ६ । ७५ । ६ ) ॥ रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयामि[1] मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयो धनुर्धन्वतेर्गतिकर्मणो वधकर्मणो वा धन्वन्त्यस्मादिषवस्तस्यैषा भवति ॥ १६ ॥[2]**

---

रथे तिष्ठन्नयति वाजिन इति । यदेतत् रथे तिष्ठन् वर्तमानः[3] सुषारथिः[4]

अभीशवः

कल्याणः सुशिक्षितोऽपि[5] सारथिः नेता रथस्य वाजिनः पुरस्तात् अग्रतः सतो रथयुक्तान् रथस्य नीडे पश्चात्सन्नुपविष्टः । क । यत्र यत्र कामयते । यत्र यत्रेच्छति[6] योद्धा तत्र तत्र नयति । तदेतत्किं सारथेर्महाभाग्यम्[7] । न इत्युच्यते । निरभीशुः[8] को हि सारथिः किं कुर्यात्सुशिक्षितोऽपि । एवम् अभीशूनाम् एतं महिमानं महाभाग्यं पनायत पूजयामि । यन्मनोऽश्वानामतिप्रवृद्धजवाना[9]मपि तेष्वश्वेषु[10] प्रनिबद्धाः रश्मयः[11] गृहीताः सारथिना पश्चात्सन्तो मनोऽनुयच्छन्ति । उपरमयन्तीत्यर्थः । संबोध्याभावात्पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः ।

'धनुः' (१२) धन्वतेः गत्यर्थस्य । तद्बलेन हीषवो गच्छन्ति ।

धनुःकस्मात्

'वधकर्मणो वा' । शत्रुवधाय[12] तदुपयते[13] । 'तस्यैषा भवति'[14] ॥ १६ ॥

---

१ छ. त. द. पूजयत. २ क. ख. ६ (१६); त. द. ६. ३ ग. °र्वतीति । य°; ठ. ड. यर्तीति. ४ ग. सुसार° था; च. ज. सुसार°. ५ च. शिक्षितो° ६ क. ख. घ. झ. ट. ठ. ड. °विष्टस्तिष्ठन् । क°. ७ ख. °थेर्महा°. ८ घ. झ. ट. ठ. ड. निरभीशुको हि°. ९ ख. महा°. १० क. ख. येश्व°; ट. तेश्व° ये. ११ ग. ज. च. 'रश्मयः' नास्ति. १२ क. ख. घ. झ. ट. ठ. ड. °धाय हि त°. १३ घ. झ. ट. ठ. ड. °दुपयते. १४ क. ख. ६ (१६); ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये षोडशः (ठ. निरुक्तभा० उ० ष० तृ० ध्याये षोड°) खण्डः; च. झ. ट. ज. अङ्को नास्ति.

**धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ( ऋ० सं० ६ । ७५ । २ )॥ इति सा निगदव्याख्याता समदः समदो वात्तेः संमदो वा मदतेर्ज्या जयतेर्वा जिनातेर्वा प्रजावयतीषूनिति वा तस्या एषा भवति ॥ १७ ॥**

धन्वना गा इति । ताः गाः तावत् धन्वना धनुषा वयमरिभ्यो जयेम । अपि च । आजिम् । इतरेतरस्य स्पर्धया यत्र लक्ष्यवेधायैव केवलमिषवः क्षिप्यन्ते वैतर्क्येण प्रतीपार्थं वा तम् आजिम् आजवनं धनुषैव वयं जयेम । या अपि तीव्रा दारुणाः समदः संग्रामाः अनेकशस्त्रसंपातसंकटाः अनेकवीरपुरुषाकीर्णाः ता अपि वयं जयेम धनुषैव । अपि च । किं बहुना । समासत एव ब्रूमः । धनुः शत्रोरपकामं कृणोति । यत्र यत्र शत्रुरस्मान् जेतुकामः स्यात्ततस्ततोऽपगतकाममस्मत्तो धनुः करोतु । अपगतकामे च तस्मिञ्छत्रौ वयं धनुषैवैताः सर्वाः दिशः प्रदिशश्च जयेमेत्येतदाशास्महे ।

**धनुः**

'समदः समदो वा संमदो वा'। संपूर्वस्य अत्तेः भक्षार्थस्य । भक्षत इव हि तत्र परस्परतः । मदतेर्वा हर्षणार्थस्य द्वितीयम् । 'संमदो वा' इति । संहृष्टास्तत्र हि परस्परतो युध्यन्ति ।

**समदः कस्मात्**

'ज्या' ( १३ ) इति वक्तव्यम् । सा पुनरियं 'जयतेर्वा जिनातेर्वा'। धात्वन्यत्वमर्थैकत्वम् । तद्बलेन हि जीयते । स पुनरेष धनुर्गुणः । तस्या एषा भवति ॥ १७ ॥

**ज्या कस्मात्**

१ क. ख. ७ ( १७ ); त. द. ७. २ ग. इति । ता°. ३ च. वयमपरिभ्यो. ४ क. ख. घ. झ. ट. ठ. ड. इतरेतरस्पर्धया. ५ ग. च. ज. वैतर्केण; घ. ट. वैतक्येण. ६ ट. प्रतीपार्थं° पताकार्थं. ७ च. °अजेवनं; ठ. ड. °आजवनं. ८ क. ख. घ. झ. ट. ठ. ड. भक्षणार्थस्य. ९ ग. च. परस्यतो; ज. परस्परतो. १० च. °न्यत्वसमर्थे°. ११ ग. च. ज. तस्येषा. १२ क. ख. ७ ( १७ ); ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयोऽध्यायः ( ज. °रुक्तभा° उ० तृ० ध्या० ) समदशः खण्डः; क. झ. ट ज. अङ्को नास्ति.

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ( ऋ० सं० ६ । ७५ । ३ ) ॥ वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्तीषुरिषतेर्गतिकर्मणो वधकर्मणो वा तस्यैषा भवति ॥ १८ ॥

वक्ष्यन्तीवेति । येयं योषिदिव काचित्कस्मैचिदिष्टाय पुरुषाय किंचिद्रहस्यं वक्ष्यन्तीव कथयिष्यन्तीव ज्या धनुष्मता पुरुषेण इषुं चिक्षिप्सता सव्येन दक्षिणेन वा पाणिना कृष्यमाणा सव्यं दक्षिणं वा कर्णं प्रत्यागनीगन्ति आगच्छति । कथमिति । प्रियं सखायं परिषस्वजाना । प्रियम् इष्टं काचित्कंचित् सखायं समानख्यानम् उपजातप्रीतिं स्त्री पुरुषमिवेषुं परिष्वजमाना । संप्रत्यर्थ एव सस्वजानेत्यभ्यासोऽर्थविशेषाभावात् । यथा हि सा कर्णं प्रत्याकृष्यते धनुष्मता तथा मध्यमात्मनो निनीय इषुं परिष्वजत इव । किमेतावदेव । नेत्युच्यते । या चेयं योषेव शिङ्क्ते योषिदिव विदग्धा काचित्कामिना पुरुषेणात्मानं प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती शिङ्क्ते सुकुमारमव्यक्तशब्दं करोति । वितताधिधन्वन् धनुषि अध्यारोपिता सेयमस्माकमेवमादिगुणयुक्ता ज्या समने संग्रामे पारयन्ती अस्तु । पारम् अन्तं नयन्ती अस्तु शत्रूणामित्येतदाशास्महे ।

ज्या

'इषुः' (१४) इत्येतत् ईषतेर्गतिकर्मणः । तदर्थमेवासावुत्पाद्यते । वधार्थस्य वा । तदर्थमेव ह्यसौ गच्छति । 'तस्यैषा भवति' ॥ १८ ॥

इषुः कस्मात्

१ छ. त. द. 'शिङ्क्ते' नास्ति. २ क. ख. छ. त. द. °न्तीषुरीष°; त. °न्तीषुरीष° रि. ३ क. ख. छ. त. द. 'वधकर्मणो वा' नास्ति. ४ क. ख. ८ (१८); त. द. ८. ५ ग. °वेति । ये°. ६ ग. च. ज. वक्ष्यती कथ°. ७ ग. ज. 'कंचित्' नास्ति. ८ ग. च. ज. °स्यातम्°. ९ ग. च. ज. विदग्वा; घ. झ. ट. विदाधा. १० क. ख. ग. च. ज. ईषते°. ११ क. ख. ८ ( १८ ); ठ. °वति । इति उ० तृ० १८ खण्डः; ङ. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये १८ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ६ । ७५ । ११ )॥ सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातं ( निरु० २ । ५ ) यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेष्वश्वाजनीं कशेत्याहुः कशा प्रकाशयति भयमश्वाय कृष्यतेर्वाणूभावाद्वाक् पुनः प्रकाशयत्यर्थान् खेशया क्रोशतेर्वाश्वकशाया एषा भवति ॥ १९ ॥

**इषुः**

सुपर्णं वस्त इति । ये एते सुपर्णं वस्ते वसते गार्ध्रं वाजा इषवः । येषां चैतेषां मृगमयो दन्तो यदि मार्गाणि फलानि । अमार्गेषु तु व्यथनस्वभावान्मार्गयन्तीव किं नु तद्यद्द्रव्यं स्याद्यदहं विध्येयमिति । ये चेमे गोभिः संनद्धाः गव्येन स्नाव्ना श्लेष्मणा च समन्ततो नद्धाः पतन्ति गच्छन्ति धनुष्मता प्रसूताः क्षिताः त एवमादिगुणयुक्ता इषवो यत्र यस्मिन् संग्रामे नराः मनुष्याः संद्रवन्ति गच्छन्ति च विद्रवन्ति च पुनर्विगच्छन्ति तत्र अस्मभ्यं शर्म शरणं सुखं जयनिमित्तं यंसन् यच्छन्तु ददत्वित्येतदाशास्महे ।

‘ अश्वाजनी ’ (१९) इत्येतत्पदम । तां पुनरेतां ‘ कशेत्याहुः ’ ।

**कशा कस्मात्**

अश्वाजनीत्येतन्न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य । अथ ‘ कशा ’ कस्मात् । सा हि ‘ प्रकाशयति ’ प्रख्यापयति ‘ भयमश्वाय ’ । ‘ कृष्यतेर्वाणूभावात् ’ । अपकृष्टा हि सा भवति चर्मणोऽणवी । ‘ वाक् ’ अपि कशेत्युच्यते । सा ‘ पुनः प्रकाशयत्यर्थान् ’ इति । अथवा । ‘ खशया ’ । वाक् खे मुखा-

---

१ छ. द कशया; त. कैशया° ख. २ क. ख. ९ (१९:) त द. ९. ३ ग. इति । य°. ४ ग. ज. च. वसतेर्गार्ध्रं वा°. ५ क. ख. घ. झ. ट. ठ ड. व्यथन°. ६ घ. झ. ट. ठ. ड. °यद्द्रव्येद्रव्यमिति. ७ क. ख. घ. झ. ट. ठ. ड. संगच्छन्ति.

काशे शेते इति । ‘ क्रोशतेर्वा ’ शब्दार्थस्य । या त्वश्वकशा तस्या ‘ एषा भवति ’ स्तुतये[1] ॥ १९[2] ॥

**आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ( ऋ० सं० ६ । ७५ । १३ ) ॥**

**आघ्नन्ति[3] सानून्येषां सरणानि सक्थीनि सक्थिः सचतेरासक्तोऽस्मिन्कायो जघनानि चोपघ्नन्ति जघनं जङ्घन्यतेरश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदयोलूखलमुरुकरं वोर्करं[4] वोर्ध्वखं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वैतत्तदुलूखलमित्याचक्षते[5] परोक्षेणेति च ब्राह्मणं तस्यैषा भवति ॥ २०[6] ॥**

---

आजङ्घन्ति सान्वेषामिति[7]। आजङ्घन्ति इति शतारि संबोधनम् ।

अश्वाजनिः

हे अश्वाजनि आजङ्घन्ति[8] सानूनि एषां सरणानि समुच्छ्रितानि सक्थीनि कटिप्रदेशान्[9] जघनान् उपजिघ्नते । जघनानि स्फिग्देशाः । तांश्च हे अश्वाजनि उपजिघ्नति[10] । इदमपि शतर्येव । रथ्यानां[11] कटिप्रदेशमश्वाजन्यभिहन्ति[12] पृष्ठयानां स्फिग्देशान् । हे अश्वाजनि या त्वमेवमभिहंसि सा त्वमेतान् अश्वान् प्रवृद्धचेतसः[13] प्रकृष्टचेतसो गमनं प्रति समुत्सुकान् समत्सु समरणेषु संग्रामेषु तथा चोदय यथा जयेयमित्येतदाशास्महे ।

‘ सानूनि सक्थीनि ’ । तानि पुनः ‘ सरणानि ’ । तद्बलेन हि

१ क. ख. घ. झ. ट. ठ. ड. ‘ स्तुतये ’ नास्ति. २ क. ख. ९ (१९); ट. °वति । इति निरु० भा० उ० तृ० एको० १९ खण्डः; ङ. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये एकोनविंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. ङ. त. ड. आघ्नन्ति; ठ. आजङ्घ्वन्ति. ४ क. ख. छ. त. द. वोर्ध्वखं वोर्करं. ५ क. ख. °चतत्तदुलू°; ङ. थ. ध. ठ. ड. चैतदु°. ६ क. ख. १० (२०); त. द. १८. ७ ग. °मिति । आ°; ठ. ड. आजङ्घ्वन्तीति. ८ ठ. ड. आघ्नन्ति. ९ ग. ज. °देशात् । जघनानि स्फि°; च. °देशान् जंघनते जघनानि स्फि°. १० ग. च. ज. जिघ्नन्ति. ११ क. ख. घ. झ. ट. ठ. ड. रथ्यानां हि क°. १२ च. °भिहं घ्नंति १३ क. ख. घ. झ. ट. ठ. ड. प्रचेतसः.

सरन्ति सर्तारः । ' सक्थिः ' कस्मात् । ' सचतेः ' । किमस्मिन्सक्तम् । ' आसक्तोऽस्मिन् कायः ' कृत्स्नं शरीरम् । ' जघनं ' कस्मात् । तद्धि भृशं हन्यते कशया ।

उलूखलं कस्मात्

' उलूखलम् ' ( १६ ) इत्येतत्पदम् । तत्कस्मात् । तद्धि ' उरुकरं[1] वा ' । उरुकरं[2] बह्वन्नं करोति । उरुशब्दात्पूर्वपदं करोतेरुत्तरपदम्[3] । ' ऊर्करं वा ' । ऊर्क्शब्दात्पूर्वपदम्[4] । ऊर्जं एव हि करणार्थं तदुच्यते । ' ऊर्ध्वखं वा ' । ऊर्ध्वशब्दात्पूर्वपदं खशब्दादुत्तरपदम् । ऊर्ध्वमेव हि तस्य खातं भवति । अथवा । ' उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् ' ( शत० ब्रा० ७ । ५ । १ । २२ ) । तत्किल क्रियमाणमुरु मे खं कुर्वित्यब्रवीदिव तथागुणयुक्तत्वात्तस्य । तदुलूखलमभवत् । ब्राह्मणमपि च भवति । ' उरुकरं[5] वै तदुलूखलमित्याचक्षतेऽपरोक्षेण ' ( शत० ब्रा० ७ । ५ । १ । २२ ) । उरु[6] करोतीत्युरुकरमेतत्प्रत्यक्षमव्यवहितगुणाभिधानम् । तत्पुनरेतद्वर्णोर्व्यत्ययेन व्यवहितगुणमुच्यते उलूखलमिति । ' तस्यैषा ' स्तुतिः ' भवति ' ॥ २०[7] ॥

**यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः ( ऋ० सं० १ । २८ । ५ ) ॥ इति सा निगदव्याख्याता ॥ २१[8] ॥**

## इति नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥[9]

यच्चिद्धि त्वं गृहेगृह[10] इति । शुनःशेपस्यार्षम् । ' आयजी वाजसा-

१ क. ख. घ. झ. ट. ठ. ड. °करत्वादुरुकरं°; ग. च. ज. उरुकं वा. २ ग. च. ज. उरुकंर ब°. ३ झ. °पदम् । ऊर्जं एव°. ४ क. ख. पदम् । करोतेरेवोत्तरपदम् । ऊ; थ. झ. ट. ठ. ड. °पदं करोतेर्वोत्तरपदम् । ऊ. ५ च. उरुक°. ६ ग. ज. ' उरु करोतीति ' नास्ति. ७ क. ख. १० (२०); ठ. °वति । इति निरु० भा० उ० तृ० ध्या० विंशः २० खण्डः; ( ह. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये विंशः ०ण्डः; घ. झ. ट. ज. अङ्को नास्ति. ८ क. ख. ११ (२१); त. द. ११. ९ ह. थ. ध. ' इति०० पादः ' नास्ति; छ. त. द्वितीयः पादः; द. इति नैरुक्ते उत्तरार्धस्य नव°. १० म. इति । शु°; ठ. ड. °च्चिद्धि त्वमिति.

तमा' (ऋ० सं० १।२८।७। निरु० ९। ३६ ) इति च। सोमाभिषवे विनियोगः ( ऐ० ब्रा० ३३ । ५ )। अभिमन्त्र्य चोपधीयतेऽग्निचयने। हे उलूखलक युज्यसे। यद्यपि त्वमन्नसंस्कारार्थं गृहे गृहे[1]

उलूखलम्

युज्यसे तथापि त्वम् इह एव अस्मद्गृहे द्युमत्तमं दीप्तिमन्तं गम्भीरम् अन्नैर्बहुभिः संस्क्रियमाणैः शब्दं वद। कथम्। जयतामिव दुन्दुभिः। ये हि जयन्ति तेषामेतदेव जयस्य पूर्वरूपं भवति गम्भीरस्वनो दुन्दुभिः। ये पुनर्जीयन्ते तेषां रूक्षस्वर इति[2] ॥ २१ ॥

चतुर्दशस्य द्वितीयः[3] पादः ।

---

तृतीयः पादः ।

**वृषभः प्रजां वर्षतीति वातिबृहति[4] रेत इति वा तद्वृषकर्मा वर्षणाद्वृषभस्तस्यैषा भवति ॥ २२ ॥**

' वृषभः ' ( १७ ) कस्मात्। स हि[5] ' प्रजां वर्षति '। प्रजोत्पत्तिकारणं रेतः सिञ्चति योनौ। ' अतिबृहति रेत इति वा '। रेतः सेक्तुमतिशयेनासावात्मानमुद्यच्छति। ' तद्वृषकर्मा वर्षणाद्वृषभः '। तेनाश्ववृषकर्मणा[6] रेतोवर्षलक्षणेन[7] नृगौरप्यतिशयेन यो युक्तोऽसावपि वृषणात्[8] रेतोवर्षणाद्धेतोः भकारमुपजनीकृत्वा वृषभ इत्युच्यते[9]। ' तस्य ' गोवृषभस्य ' एषा ' स्तुतिः ' भवति ' ॥ २२ ॥

वृषभः कस्मात्

१ ग. च. ज. ' गृहे ' सकृदेव. २ क. ख. ११ ( २१ ); ठ. °इति। इति निरुक्त० उ० तृ० एकविंशतिः खण्डः; ड. इति। इति निरु० २१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ ठ. °शस्यपादः; ड. °शस्य पादः २. ४ क. ख. १ ( २२ ); त. द. १. ५ ग. च. ज. ह. ६ क. ख. घ. झ. ट. ठ. ड. तेनास्य वृष°. ७ क. ख. घ. झ. ट. ठ. ड. 'णेन गौर°; च. 'क्षणे नृगौर°; ग. ज. रेतोवर्षणेन गो°. ८ ध. झ. ट.. वर्षणा°. ९ क. ख. १ ( २२ ); ठ. °वति। इति नि० उ० तृ० २२ खण्डः; ड. °वति । इति निरुक्तटीकाया० २२ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

**न्यक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः । तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ( ऋ० सं० १० । १०२ । ५ )॥ न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातममेहयन्वृषभं मध्य ओजेराजयनस्याजवनस्येति वा तेन तं सूभर्वं राजानं भर्वतिरत्तिकर्मा तद्वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय प्रधन इति संग्रामनाम प्रकीर्णान्यस्मिन्धनानि भवन्ति द्रुघणो द्रुममयो घनस्तत्रेतिहासमाचक्षते मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय तदभिवादिन्येषर्ग्भवति ॥ २३ ॥**

न्यक्रन्दयन्नुपयन्त एनमिमिति[1] । एवं तावत् व्याख्यातं प्रतिपदम् । एकवाक्यतया तु मन्त्रस्य व्याख्येयमिति । मन्त्रदृग्ब्रवीति । यत् वृध्वे[4] केनाजैषीस्त्वमेतं राजानमिति तत्र मे शृणुत । वृषभः यमेतम् आजेः शरपथस्य[6] मध्ये वर्तमानं वृषभं न्यक्रन्दयन् उपयन्ति न्यक्रन्दयन्तः एनं हे जनाः[7] युक्त्वा[8] रयन्त युक्ता रयन्तेति उपयन्ति उपगच्छन्ति परिवृण्वन्ति । अमेहयन्तश्च[9] तं मुहूर्तं[10] स्थीयतां यावदयं संक्रन्मूत्रं करोति ततो लघु मुखं भविष्यतीति । स हि गोमिनामाजिसृतां स्वभावः । तेन अमुना वृषभेण सूभर्वं सुभगं[12] शोभनभोगं राजानं वा[13] । तद्वा सुभगं सुयवसदेशसमृद्धं शतवत् शतैस्तद्वत् संख्यासहस्रं गवां दशशतानि । यद्वा । असंख्यं बहु । किमिति[14] । मुद्गलोऽहं प्रधने[15] धनं प्रति स्पर्धया विजिगीषोरावयोः प्रवृत्तयोर्वाहिकायां जिगाय जितवानिति ।

१ छ. त. द. ‘ आजेः ’ नास्ति. २ क. ख. २ ( २३ ); त. द. २. ३ ग. °मिति[11] । ए°; ठ. ड. °न्द्रयमिति. ४ क. ख. यद्वृषभकेणाजैषी°; घ. यद्बुध्वे के°; झ. ट. यद् बुध्वे के°; ठ. ड. यद्वध्वे के°. ५ ध. झ. ट. मेये श्रु°. ६ ग. च. ज. सर°. ७ व. झ. ट. जानाः. ८ च. युक्त्वा र°; क. ख. फुत्कारवन्तं कारयतोति उप°. ९ क. ख. घ. झ. ट. ठ. ड. अमेहयन्मेह्यन्तश्च. १० घ. झ. ट. ठ. ड. शक्रु°. ११ ग. च. ज. मात्रि°. १२ ग. च. ज. सुतमं. १३ क. ख. घ. झ. ट. ‘ वा ’ नास्ति. १४ च. कमि°. १५ क. ख. घ. झ. ठ. ड. प्रधनं संग्रामे धनं; ग. च. ज. प्रधाने.

द्रुघणः कस्मात्

'द्रुघणः' (१८) इत्येतत्पदम् । स पुनरेषः [1]'द्रुमयो घनः' द्रुप्रकृतिः । तत्प्रकृतिवचने मयट् (पाणि० ५।४।२१) । द्रुशब्दात् पूर्वपदं घनशब्दादुत्तरपदम् । मुद्गरोऽभिधेयः । 'तत्रेतिहासमाचक्षते' इति स्तुतिलाभनिमित्तमुभयोरप्येकमेव वृषभद्रुघणयोः । 'मुद्गलो भा[2]र्म्यश्व ऋषिः' इत्येव[3]मादि । स किल द्वितीयस्य गोरभावाद्राज्ञा सह

तत्रेतिहासः

प्रतिस्पर्धमानः ऐश्[4]वर्यादन्वादिश्य 'द्रुघणं' वृषभेण सह युक्त्[5]वा राज्ञा सहाजिं ससर्प । स च तं 'जिगाय' जितवान् । यथा चैतदेवं तस्यार्थस्य 'अभिवादिन्येषाभवति' ॥ २३ ॥[6]

---

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् । येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु (ऋ० सं० १०।१०२।९) ॥ इमं तं पश्य वृषभस्य सहयुं[7]जं काष्ठाया मध्ये द्रुघणं शयानं येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु पृतनाज्यमिति संग्रामनाम पृतनानामजनाद्वा जयनाद्वा मुद्गलो मुद्गवान् मुद्गगिलो वा[8] मदनं गिलतीति वा मदंगिलो वा मुदंगिलो वा भार्म्यश्वो भृम्यश्वस्य पुत्रो भृम्यश्वो भृमयोऽस्याश्वा अश्वभरणाद्वा पितुरित्यन्ननाम पातेर्वा पिबतेर्वा प्यायतेर्वा तस्यैषा भवति ॥ २४ ॥[9]

इमं तं पश्य वृषभस्येति[10] । जितायामाजाववसितायां निसरणमाजन्[11]त एवाप

१ ग. घ. ज. °कृति; झ. द्रुमप्रकृतिः. २ ग. °लो भार्म्यश्व; च. °लो भास्यश्व. ज. °लोम्यश्व ऋ°. ३ ग. ख. ज. °मादिः. ४ ग. ज. एश्वर्यं दत्वा॰ दिश्य द्रु°; च. ऐश्वर्यं दित्वादिश्य द्रु°. ५ ग. च. ज. युक्ता. ६ क. ख. २ (२३); ठ. °वति । इति नि० उ० २३ खण्डः; ड. °वति । इति निरुक्तटीकायामुत्तरषट्० ३ ध्याये २३ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ७ छ. द. सहयुजं; त. सहयुंजं° यु. ८ छ. त. द. 'वा' नास्ति; ९ क. ख. ३ (२४);. त. द. ३. १० ग. °स्येति । जि°; ठ. ढ. पश्येति. ११ ग. च. ज. ठ. ढ. °माजन्त°; ट. °माजन्त° त.

विद्धमुद्गरो मुद्गलः केनचित्पृष्टः केन सह युक्त्वा वृषभेणेमं राजानमजैषीरिति । स तमुपदिशन्नेव द्रुघणमाउयेन्ते[1] तस्मिन्नपविद्धमसावज्ञमिव कुत्सयन् राजानमनर्चा तस्मै प्रत्याचचक्षे । इमं तं पश्य येनाजैषमिति । वृषभस्य सहयुजम् । क वर्तमानम् । काष्ठायाः आज्यन्तस्य मध्ये द्रुघणं शयानम् अपविद्धम् । येन जिगाय शतवत्सहस्रम् इति व्याख्यातम् ।

द्रुघणः

'पृतनाज्यमिति संग्रामनाम' । तत्कस्मात् । 'पृतनानामजनाद्वा' । पृतनाः मनुष्याः । ते यस्मिन्नजन्ति गच्छन्ति । पृतनाशब्दात्पूर्वपदमजतेरुत्तरपदम् । 'जयनाद्वा' । तत्रोत्तरपदे विकल्पयन्ति । ते हि तत्र जयन्ति । 'मुद्गलो मुद्गवान्' । लो मत्वर्थे । अथ 'वा मुद्गगिलो'[2] मुद्गभोजनप्रायः । मुद्गशब्दः[3] पूर्वपदं गिलशब्द[4] उत्तरपदम् । 'मदनं गिलतीति वा' । मदनः कामः । तमसौ गिलति वशीकरोति । जितेन्द्रिय इत्यर्थः । मदनशब्दः[3] पूर्वपदं गिलतिशब्द[3] उत्तरपदम् । 'मदंगिलो वा' । मुदंगिलो वा । मद उद्रेकः । तमसौ गिलति । उपशान्त इत्यर्थः । 'मुदंगिलो वा' । हर्षमसौ गिलति । निवृत्त इत्यर्थः । 'भार्म्यश्वो भृम्यश्वस्य पुत्रः' । 'भृम्यश्वः' पुनः 'भृमयोऽस्याश्वाः' । अनवस्थायिनः । 'अश्वभरणाद्वा' । बिभर्त्ति वा असावश्वान् ।

पृतनाज्यं कस्मात्

मुद्गलश्च

भार्म्यश्वश्च

'पितुः' (१९) इत्येतद्वक्तव्यम् । तत्पुनरेतत् 'अन्ननाम' । तत्कस्मात् । 'पातेर्वा' रक्षणार्थस्य । 'पिबतेर्वा' पानार्थस्य । 'तस्यैषा भवति'[5] ॥ ( २४ )॥

पितुः कस्मात्

**पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ( ऋ० सं० १ । १८७ । १ )॥ तं पितुं स्तौमि महतो**

१ ग. घ. ज. ट. ड. °मायन्ते. २ च. मुद्गलो मुद्गवोजन°. ३ क. ख. घ. झ. ट. ठ. ड. शब्दात्. ४ क. ख. घ. झ. ट. ठ. ड. शब्दादुत्त°; च. लिंगश°. ५ क. ख. ३ ( २४); ठ. ड. °वति । इति निरुक्तटीकाया ( ठ. °रुक्तभाष्ये ) मुत्तरषट्के तृतीयेऽध्याये चतुर्विंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

धारयितारं बलस्य तविषीति बलनाम तवतेर्[1]वृद्धिकर्मणो यस्य त्रित[2] ओजसा बलेन त्रितस्त्रिस्थान इन्द्रो वृत्रं[3] विपर्वाणं व्यर्दयति नद्यो व्याख्यातास्तासामेषा भवति ॥ २५ ॥

---

पितुं नु स्तोषमिति । अगस्त्यस्यार्षम् । यस्य पितोः ओजसा बलेन बलाधिपतिरपीन्द्रः त्रिस्थानः त्रिषु स्थानेष्वप्रतिहतप्रभावः वृत्रं

पितुम् — मेघं विपर्वं[4] विगतपर्वाणं विगतसन्धिबन्धनं कृत्वा व्यर्दयत् विविधमर्दयति अपुनरावृत्तये

तं पितुम् अहम्[5] अन्नं तविषीसंज्ञकस्य महतो[6] बलस्य धर्माणं धारयितारं स्तौमि। को हि नाम तन्न[7] स्तुयाद्[8]यस्मादृते त्रिलोकाधिपतिरपीन्द्रः किंचिदप्यशक्तः कर्तुमित्यभिप्रायः। 'तविषी (निघ० २।९।१०) इति बलनाम' 'तु वृद्धौ' इत्यस्य। तद्धि सर्ववस्तुभ्यो[9] ज्यायः।

'नद्यः' (२०) अवसरप्राप्ताः। ताः पुनरेताः 'व्याख्याताः' 'नदना भवन्ति शब्दवत्यः' (निरु० २।२४) इति। 'तासामेषा भवति' ॥२५[10]॥

---

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया (ऋ० सं० १०।७५।५)॥ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वमासिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणुहि सुषोमया चेति समस्तार्थोऽथैकपदनिरुक्तं गङ्गा गमनाद्यमुना प्रयुवती गच्छतीति वा प्रवियुतं गच्छतीति वा सरस्वती सर इत्युदकनाम सर्तेस्तद्वती शुतुद्री शुद्राविणी क्षिप्रद्राविण्याशु तुन्नेव द्रवतीति वेरावतीं परुष्णीत्याहुः पर्ववती[11] कुटिलगामिन्यासिक्न्य-

१ क. ख. ङ. थ. ध. ठ. ह. तवतेर्वा वृद्धि°. २ छ. त. द. व्योज°. ३ क. ख. ४ (२५), त. द. ४ च. विपर्व वि°. ५ क. ख. घ. झ. ट. ठ. ह. अन्नमहं. ६ क. ख. घ. झ. ट. ठ. ह. महो महतो. ७ क. ख. घ. झ. ठ. ह. न तत्. ८ ग. च. ज. स्तुयात्°. ९ घ. झ. ठ. ह. °वसुभ्यो; ट. वसुभ्यो° स्तु. १० क. ख. ४ (२५); ठ. ह. °वति। इति निरुक्तटीकाया—(ठ.- °रुक्तभाष्ये) मुत्तरषट्के तृतीयेऽध्याये पञ्चविंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ११ क. ख. ङ. थ. ध. ठ. ह. °वती भास्वती कुटि°.

शुक्लासिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितं मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति वितस्ता विदग्धा विवृद्धा महाकूलाऽऽर्जीकीयां विपाळित्याहु[1]र्ऋजी[2]कप्रभवा वर्जुगामिनी वा विपाड्विपाटनाद्वा विपाशनाद्वा विप्रापणाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य। मुमूर्षतस्तस्माद्विपा[3]ळुच्यते पूर्वमासीदुरुञ्जिरा सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः सिन्धुः स्यन्दनादापआप्नोतेस्तासामेषा भवति ॥ २६[4] ॥

इमं मे गङ्गे यमुने इति[5]। हे मरुद्वृधे गङ्गे यमुने सरस्वति शुतुद्रि[6] यूयम् इमं मे मम स्तोमम् आसेवध्वं परुष्ण्या सह। मरुद्वृधे आर्जीकीये त्वमपि असिक्न्या वितस्तया सुषोमया[7] च सह आशृणुहि आभिमुख्येन स्थित्वा शृणुहीति समस्तार्थः। एवं सर्वत्र पूर्वं समस्तार्थो वक्तव्य इत्युपप्रदर्शनार्थम्।

नद्यः

'अथैकपदनिरुक्तम्'। 'गङ्गा गमनात्'। सा हि विशिष्टं स्थानं गच्छति। गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा। 'यमुना प्रयुवती गच्छति'। प्रकर्षेण मिश्रयन्त्यन्याभिर्नदीभिः स्वान्युदकानि गच्छति। 'प्रवियुतं गच्छतीति वा'। स्तिमितमिव तरङ्गैर्गच्छति। 'सरस्वती सर इत्युदकनाम'। तत्कस्मात्। 'सर्तेः' 'सृ गतौ' (धा० पा० १–९६० ॥ ३–१७) इत्यस्य। तेन सरसा विशिष्टेन 'तद्वती'। विज्ञायते हि राजसूये सारस्वतीनामपामभिषेकार्थवादः। 'वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रामत्तत्त्रेधाभवद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयं सरस्वती तृतीयं प्राविशत्'( मैत्रा० सं० ४। ३। ९ ) इति। 'शुतुद्री शुद्राविणी क्षिप्रद्राविणी'। शु इति क्षिप्रनाम। अथ 'वा आशु' क्षिप्रमसौ 'तुन्नेव' विद्धेव केनचित् 'द्रवति'। आकारलोपः पूर्वपदे। 'इरावतीं परुष्णीत्याहुः'। येयमिरावतीति लोके प्रसिद्धा तामिमामेतस्मिन्मन्त्रे मन्त्रार्थविदः परुष्णीत्याहुः। सा कस्मात्।

गङ्गादिशब्दानां व्युत्पत्तिः

१ छ. त. द. °पालित्या°. २ ङ. ध. ठ. ड. °ऋजूक°; थ. °ऋजुक°. ३ छ. त. द. °पालुच्य°. ४ क. ख. ५ (२६) त. द. ५. ५ ग. इति²² । हे°; ठ. ड. °यमुने सरस्वतीति. ६ ग. च. ज. सुतु°. ७ ख. सुषोम°.

'पर्ववती'। किमुक्तं भवति । 'कुटिलगामिनी' इति । तदस्याः पर्ववत्त्वं यानि कुटिलानि तानि पर्वाणीव तस्यास्तैस्तद्वतीति । 'असिक्नी' कस्मात् । सा हि 'अशुक्ला असिता'। कथम् । 'सितमिति वर्णनाम'। स च पुनः शुक्ल इति प्रसिद्धो लोके । 'सितासितौ यद् वृषौ' इति बलदेववासुदेवावधिकृत्योक्तम् । तस्य शुक्लस्य 'प्रतिषेधोऽसितम्'। कृष्णमित्यर्थः । तस्मात्कृष्णोदका असिक्नी । 'मरुद्वृधाः सर्वा नद्यः। मरुत एना वर्धयन्ति' वर्षेण । तस्मात्प्रत्येकं नद्यभिधानमनुषज्यते विशेषणत्वेन हे मरुद्वृधे गङ्गे हे मरुद्वृधे यमुने इति । 'वितस्ता अविदग्धा'। 'वैदेहको नामाग्निः । स किल नदीरन्या निर्ददाह न ताम्'[1] इति सामिधेनीब्राह्मणे विज्ञायते । अथवा । 'विवृद्धा महाकूला'[2]। विस्तीर्णा । 'आर्जीकीयां लोके विपाळित्याहुः'[3]। सा कस्मात् । 'ऋजीकप्रभवा'। ऋजीको[4] नाम पर्वतस्तस्मात्प्रभवतीति तद्धितेन । अथ वा । ऋजुगामिनी' सत्यार्जीकीया । 'विपाट् विपाटनाद्वा'। विपाटयत्यसौ भूमिमतिवेगवत्त्वात्[5] गच्छन्तीति । 'विपाशनाद्वा'। किमस्यां व्यपाशयन्त । 'पाशा अस्यां व्यपाशयन्त वसिष्ठस्य मुमूर्षतः[6]'। वसिष्ठः किल मम-ज्जास्यां मुमूर्षुः पुत्रमरणशोकार्तः पाशैरात्मानं बद्ध्वा । तस्य किल ते पाशा अस्यां व्यपाशयन्त[7] । व्यमुच्यन्तोदकेन । ततः प्रभृति सा विपाडभवत् । 'पूर्वमासीदुरुञ्जिरा' नाम सा । उरुजलेत्यर्थः । 'विप्रापणाद्वा' उदकानां विपाट् । 'सुषोमा[8] सिन्धुः'। सा कस्मात् । 'यदेनामभिप्र-सुवन्ति' अभिगच्छन्त्यन्याः प्रभृता 'नद्यः'। 'सिन्धुः' कस्मात् । 'स्यन्दनात्'। सा ह्यविच्छेदेन विशेषतः स्यन्दत इति ।

'आपः' (२१) इत्येतत्पदम् । ताः पुनरेताः 'आप्नोतेः'। सर्वमा-भिराप्तमिति । 'तासामेषा भवति'[9] ॥ २६ ॥

१ ग. च. ज. ठ. ड. °पयुन. २ क. ख. ग. च. ज. महाकुला. ३ क. ख. °पाडित्या°; ग. च. ज. व. झ. ट °पालित्या°. ४ ग. च. ज. ऋजुको°; ठ. ड. ऋजुको°. ५ ग. च. ज. वेगत्वा°. ६ ग. च. ज. मुहुर्ष°. ७ ग. च. ज. °पास्यन्त. ८ ग. च. ज. सुषोमा. ९ क. ख. ५ (०६), ठ. ड. °वति । इति निरुक्तटीकायामृजुगत्वर्थके तृतीयेऽध्याये षड्विंशतिः खण्डः; व. झ. ट. ज. अङ्को नास्ति.

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ( ऋ० सं० १० । ९ । १ ) ॥ आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनायौषधय ओषद्धयन्तीति वौषत्येना[2] धयन्तीति वा दोषं धयन्तीति[3] वा तासामेषा भवति ॥ २७ ॥

---

आपो हि[4] ष्ठेति । सिन्धुद्वीपस्यार्षम् । हे आपः आपयित्र्यः स्थ मयो-

आपः

भुवः मयोभावयित्र्यश्च सुखभावयित्र्यः याः ताः यूयम् अस्मान्[6] ऊर्जे अन्नाय यथा वयमलं स्याम भोजनाय च[7] दधातन धारयत अनुगृह्णीध्वम् । किंच । महे रणाय महते च नो रणाय रमणीयाय चक्षसे दर्शनाय । श्रुतिस्मृत्युदितसम्यग्दर्शना भूत्वा अन्नप्रयोगे यथा वर्तेमहि तथा जुरध्वं यूयमित्येतदाशास्महे ।

'ओषधयः' (२२) इत्येतत्पदम् । ताः पुनरेताः 'ओषद् धयन्ति'।

ओषधयः कस्मात्

यत्किंचिदोषच्छरीरे दहद् रोगजातं भवति क्षयादि तदेता अत्ताः[10] सत्यो धयन्ति पिबन्ति नाशयन्ति । तदेवमोषतेः पूर्वपदं धयतेरुत्तरपदं कर्तरि कारके । 'ओषत्येना धयन्तीति वा' । [11]ओषति कस्मिंश्चिदुदरादावङ्गे एना धयन्ति पिबन्ति प्राणिनो[12] दाहोपशमनाय तावेव धातू कर्माणि कारके । 'दोषं धयन्तीति वा' । यः कश्चिदुपजायते दोषो वातादिकृतः शरीरे तमेता धयन्ति । इति दोषशब्दात्पूर्वपदं धयतेरेवोत्तरपदं कर्तर्येव कारके ।

'तासाम्' ओषधीनाम् 'एषा' 'भवति' ॥ २७ ॥[14]

१ छ. त. द. ओषं धय°. २ छ. वौष° वो; त. वोष°. ३ क. ख. ६ (२७); त. द. ६. ४ ग. °ष्ठेति । सि°. ५ ग ज. °यित्र्यं सुख°; च. °यित्र्यंश्च सु°. ६ क. ख. घ. झ. ट. ठ. ड. यूयं नोऽस्मा°. ७ घ. झ. ट. ठ. ड. च तथा द°. ८ क. ख. ग. च. ज. °गृह्णीध्वम् ९ ग. च. ज. ओषधयन्ति १० ग. ज. आत्ताः ११ ग. च. ज. उष°. १२ ग. च. ज. °णिनो नो दाह उपनाम ( च. °नान ) य । तावे°. १३ ग. च. ज. कर्मकारके. १४ क. ख. ( २७ ); ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ( ठ. निरु० भाष्ये उ० ) तृतीयेऽध्याये सप्तविंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

**या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च ( ऋ० सं० १० । ९७ । १ ) ॥ या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां [1]हरणानां भरणानामिति वा । शतं धामानि सप्त च[2] । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति [3]जन्मान्यत्राभिप्रेतानि सप्त शतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा रात्रिर्व्याख्याता[4] तस्या एषा भवति ॥ २८ ॥**

या ओषधीः पूर्वा जाता इति[5] । ओषधिसूक्ते प्रथमैव । अग्निचयने क्षेत्रमनेन मन्त्रेण ग्राम्यारण्याभिरोषधीभिरुप्यते ( मैत्रा० सं० २ । ७ । १३ ) । या एता ओषधयः पूर्वाः प्रथमजाताः । कुतः । देवेभ्यः । न तावद्देवा उत्पद्यन्ते । अथैता एव पूर्वमुत्पद्यन्ते । कियति काले । त्रियुगं पुरा । कलिद्वापरत्रेताभ्यः पूर्वम् आदिकल्पे आद्ये कृतयुगे । देवानामपि ह्यन्नमनपेक्ष्य जीवनहेतु स्थितिर्नास्तीति[6] पूर्वमन्नमुत्पद्यते पश्चाद्देवा इति । किं तासामिति । मनै नु बभ्रूणामहं शतं धामानि सप्त च । तासाम् अहं बभ्रूणां बभ्रुवर्णानाम् । ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिलाः संपद्यन्ते । मनै जाने । शतं धामानि सप्त च । सप्ताधिकं शतमहं तासां यथावज्जाने । अथवा । बभ्रूणामिति वर्णव्याप्त्या 'हरणानाम्' इति । ता हि क्षुदादि हरन्ति । 'भरणानामिति वा' । भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य वा । 'स्थानानि नामानि जन्मानि धामानि त्रयाणि भवन्ति' । इह तु 'जन्मान्यभिप्रेतानि' । सप्तशतमोषधिजातय एतस्मिन्मन्त्रे अभिप्रेताः । अथवा । 'सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा' । अस्मिन् पक्षे धामानि स्थानानि ।

ओषधयः

धामशब्दस्यार्थाः

१ छ. त. द. 'भरणानां हरणानामिति' । सायणभाष्ये निरुक्तपाठस्तथैव. २ ङ. थ. ध. ठ. ह. °ेति. ३ छ. त. स्थानान्य° जन्मा. ४ क. ख. ७ ( २८ ); त. द. ७. ५ ग. इति° । ओ°; ठ. ह. ओषधीरिति. ६ ग. च. ज. 'स्थिति नास्ती°. ७ क. ख. घ. ङ. ट. ठ. ढ. धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि.

'रात्रिः' (२३) इत्येतत्पदम् । तत्पुनरभिधानतोऽभिधेयतश्च व्याख्यातं 'रातेर्दानकर्मणः' (निरु० २ । १८) इति । तस्या एषा 'भवति'[1] ॥ २८[2] ॥

**आ रा॑त्रि॒ पार्थि॑वं॒ रजः॑ पि॒तुर॑प्रायि॒ धाम॑भिः । दि॒वः सदां॑सि बृह॒ती वि ति॑ष्ठस॒ आ त्वे॒षं व॑र्तते॒ तमः॑ (खैलिकं सूक्तं २५) ॥[3]**

**आपूपुरस्त्वं रात्रि पार्थिवं रजः स्थानैर्मध्यमस्य दिवः सदांसि बृहती महती वितिष्ठस आ वर्तते त्वेषं तमो रजोऽरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं ग्रामादरमणं भवतीति वा तस्या एषा भवति ॥ २९[4] ॥**

आ रात्रि पार्थिवं रज इति[5] । कुशिकस्यार्षं रात्र्या वा । हे रात्रि या त्वम् आपपुरः पार्थिवं रजः । पृथिवीलोकमापूरयसि । किं केवलमेतदेव । नेत्युच्यते । पितुर्धामभिः[6] । मध्यमस्य स्थानैः सह । रात्रिः सहान्तरिक्षेण । तदपि ह्यापूर्यते[7] तमसा । किमेतावदेव । नेत्युच्यते । किं तर्हि । दिवो द्युलोकस्यापि यानि सदांसि सदनानि । येषु द्युलोकवासिनः सदनेषु सीदन्ति[8] तान्यपि । बृहती महती यस्मात्त्वं तस्मादूरेऽपि वर्तमाना वितिष्ठसे । विष्टभ्य तिष्ठसि । न केवलं विष्टभ्यैव तिष्ठसि । किं तर्हि । आपूर्य[9] द्युलोकमपि तत्पूरणातिशिष्टं तमः त्वेषं महत्पुनरिममेव लोकं प्रत्यावर्तते यस्यास्तव सा त्वमस्माकं सर्वदा शिवा भवेत्येतदाशास्महे ।

---

१ क. ख. घ. झ. ट. एषा स्तुतिर्भवति. २ क. ख. ७ (२८); ञ. °वति । इति निरुक्तभा० उत्तरषट्के तृ० ध्याये अष्टाविंशतिः खण्डः; ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २८ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ३ ङ. ध. पितुरः प्रायु धा°; थ पितुरप्रायि° यु; ड. पितुरप्रायु धा°. ४ क. ख. ८ (२९); त. द. ८. ५ ग. इति° । कु°. ६ च. °च्यते° । किं तर्हि° पितुर्धा० नेत्युच्यते. ७ क. ख. घ. झ. ट. °पूर्यसे; ठ. ड. पूरयसे. ८ क. ख. घ. झ. ट. ठ. ड. स्थानेषु सीदन्ति. ९ ग. च. ज. आपूर्य.

'अरण्यानी' (२४) इत्येतत्पदम् । सा पुनः 'अरण्यस्य पत्नी' पालयित्री देवता । अथ अरण्यं कस्मात् । तद्धि ग्रामादपार्णमपगतं भवति । 'ऋ गतौ' (धा० १-९६१॥ ३-१६) इत्यस्य । 'अरमणं भवतीति वा' । रमेः प्रतिषेधपूर्वस्य । न ह्यरण्ये रतिर्भवति । 'तस्या एषा भवति' ॥ २९ ॥

अरण्यानीपदस्यार्थः

अरण्यं कस्मात्

**अरण्यान्यरण्यान्यसा या प्रेव नश्यसि । कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती३ँ ॥ (ऋ० सं० १० । १४६ । १) ॥ अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः[3] परिभयार्थे वा श्रद्धा श्रद्धानात्तस्या एषा भवति ॥ ३० ॥**

———

अरण्यान्यरण्यानीति[4] । देवमुनेरार्षम् । संबुद्धावेकवचनं पूर्वम् । द्वितीयाबहुवचनमुत्तरम् । उत्पन्नादिङ्मोहो[6] मन्त्रदृगरण्ये भीतोऽरण्याधिदेवतामरण्यानीं ब्रवीति । अहं तावदेतस्मिन्नरण्ये निरमणे भीतः । त्वं कथं न बिभेषीति भीषयमाण इव । हे अरण्यानि कथं त्वम् अरण्यान्येव वनानि प्रति केवलं प्रेव[9] पराच्येव पराङ्मुख्येव अनावर्तमाना नश्यसि[10] । असौ असाविति दृश्यमानेव । यतो ब्रवीमि । कथं[11] किमिति ग्रामं न पृच्छसि । न त्वा भीर्मामिव विन्दति । अथ 'वा इवः[12] परिभयार्थे' ।

१ क. ख. घ. झ. ट. ठ. ड. कस्मात् । अरण्यमपार्णं ग्रामात् । तद्धि°. २ क. ख. ८ (२९); ठ. °वति । इति नि० भा० उ० तृ० २९ खण्डः; ड. °वति । 'इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २९ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. ९ (३०); त. द. ९. ४ ग. 'नीति[२६] । दे; क. ख. घ. झ. ट. ठ. ड. °नीति ऐ (ठ. ड. ए) रंमदस्य दे°. ५ च. पूर्वं अरण्यमपार्णं ग्रामात् । द्धि°. ६ क. ख. घ. झ. ट. ठ. ड. 'दिङ्मोहो. ७ ग. ज. भीतोऽरधिदे°; च. 'रण्योधिदे°. ८ ग. च. ज. वनानि. ९ ग. ज. प्रव. १० ग. च. ज. नस्यसि. ११ च. झ. ट. ठ. ट. कथा ग्रामं न पृच्छसि । कथं. १२ ग. च. ज. इव प°.

न त्वमीषदपि बिभेषीति परिरीषदर्थः । तद्यथा । परिमधुरं पर्याप्तमिति[1] । 'श्रद्धा' (२५) इत्येतत्पदम् । अत्र 'श्रत्' इति सत्यनाम

श्रद्धा कस्मात्

पूर्वपदम् । तत्सत्यमस्यां[2] धीयत इति श्रद्धा । धर्मार्थकाममोक्षेष्वविपर्ययेणैवमेतदिति या बुद्धिरुत्पद्यते तदधिदेवता भावाख्या श्रद्धेत्युच्यते । सा पुनराग्नेयं सर्वं प्रकाशमित्यग्निरेव । 'तस्या एषा भवति'[3] ॥ ३० ॥

**श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ( ऋ० सं० १० । १५१ । १ ) ॥**

**श्रद्धयाग्निः साधु समिध्यते श्रद्धया हविः साधु हूयते श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः पृथिवी व्याख्याता तस्या एषा भवति[4] ॥ ३१ ॥**

श्रद्धयाग्निः समिध्यत इति[5] । श्रद्धायाः कामायन्या[6] आर्षम् । य एव

श्रद्धा

अग्निः श्रद्धया उपेतः श्रद्धयैवा[7]स्तिक्यबुद्धिमालम्ब्य समिध्यते कर्मणि स एव साधु शोभनं समिध्यते[8] । इतरो हि समिद्धोऽप्यसमिद्ध एवाश्रद्धासमिद्धाग्निकर्मणः फलाभावात् । एवमेव श्रद्धया हूयते हविः । यदेव श्रद्धया हूयते हविस्तदेव साधु हूयतेऽन्यस्याफलत्वात् । उक्तं च । 'नाश्रद्दधानाय हविर्जुषन्ति देवाः' इति । एवं चेत् श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि । भगस्य भागधेयस्य धर्मस्य मूर्धनि । मूर्धा शिरः । प्रधानमिदमङ्गं धर्मस्य या श्रद्धा । तदभावे धर्माभावात् । अपि च । वचसा एव वचनेनैव[9] मन्त्रगतेन

१ ग. पर्यन्तामिति । ३० । श्र°; च. ज. पर्यन्तामिति. २ ग. च. ज. °मस्यान्धीयत°. ३ क. ख. ९ (३०); ठ. °वति । इति निरु० भा० उ० तृती० ३० खण्डः; ड. °वति । इति निरुक्तभाष्ये तृतीयेऽध्याये ३० खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ क. ख. १० ( ३१ ); त. द. १०. ५ ग. इति° । श्र°. ६ घ. झ. ट. ठ. ड. कामायिन्या. ७ ग. च. ज. श्रद्धैवा°. ८ च. °ध्यते स एव साध्वं शोभनं न इत°. ९ ग. च. ज. 'वचनेनैव' नास्ति.

‘ अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः ’ इत्यनेनैतदुद्घाट्य शिरः प्रकाशमावेदयामः आघोषयामो नाश्रद्दधानस्य धर्म इति ।

‘ पृथिवी ( २६ ) व्याख्याता ’ । ‘ अथ वै दर्शनेन पृथः ’ इत्यत्र ( निरु० १ । १४ ) । ‘ तस्या एषा भवति ’ ॥ ३१ ॥

---

**स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ( ऋ० सं० १ । २२ । १५ ) ॥ सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो[3] भवति यच्छ नः शर्म यच्छन्तु शरणं सर्वतः पृथ्वपा व्याख्याता तस्या एषा भवति ॥ ३२ ॥**

स्योना पृथिवि भवेति । मेधातिथेरार्षम् । हिरण्यनाशप्रायश्चित्तेष्टयां

पृथिवी — भौमस्यैककपालस्य पुरोऽनुवाक्या ( मैत्रा० सं० २ । २ । ७ ) । हे पृथिवि स्योना सुखा त्वमस्माकं भव । कथम् । अनृक्षरा निष्कण्टका निवेशनी निवास-योग्या । निविष्टानां चास्माकं यच्छ देहि शर्म सुखं सर्वतः पृथु सर्वतो विस्तीर्णमिति ।

‘ ऋक्षरः कण्टक ऋच्छतेः ’ । कमहं तापयामीत्येवमर्थमुद्गतः कण्टकः । कण्टतेर्वा । स हि ‘ उद्गततमो भवति ’ वृक्षात् ।

१ ग. इति । ३१ । पृ°. २ क. ख. १० (३१); ठ. °वति । इति निरु० उ० तृ० ३१ खण्डः; ड. वति निरुक्तभाष्ये ३१ खण्डः; ग. ज. घ. झ. ट. अङ्को नास्ति. ३ छ. त. द. °तरो. ४ क. ख. १२ ( ३२ ); त. द. ११. ५ ग. °वेति । मे°. ६ ग. च. ज. °मस्येक°. ७ ग. च. ज. द्यावापृथिवि. ८ क. ख. घ. झ. ट. ठ. ड. अनृक्षरा निवेशनी । अनृ°. ९ क. ख. घ. झ. ट. ठ. ड. ऋच्छतेः । कण्टकः कंतपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति । कर्म; ग. च. ज. ऋक्षतेः.

‘ अप्वा ’ ( २७ ) व्याख्याता । ‘ अप्वा यदेनया[1] विद्धोऽपवीयते[2] व्याधिर्वा भयं वा ’ इत्यत्र[3] ( निरु० ६ । १२ ) । ‘ तस्या एषा भवति ’[4] ॥ ३२ ॥

---

**अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ( ऋ० सं० १० । १०३ । १२ )॥ अमीषां चित्तानि प्रज्ञानानि[5] प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्तामग्नाय्यग्नेः पत्नी तस्या एषा भवति[6] ॥ ३३ ॥**

अमीषां चित्तमिति[7] । अप्रतिरथस्यार्षम् । हे अप्वे अमीषाम् अस्मच्छत्रूणां चित्तानि मनांसि प्रतिलोभयन्ती[8] प्रत्येकं लोभयन्ती गृहाण अङ्गानि । सर्वगात्राण्याविश । त्वयैते आविष्टसर्वगात्राः साध्वसिन उत्पन्नवेपथवः संमूढा अप्रतिपक्षाः सन्तु । परेहि परागच्छ एतान् । अपि च । यावच्च प्रत्यवस्थितास्तावदेकैकं क्षिप्रम् अभिप्रेहि । अभिप्रगम्य च निर्दह एषां हृदयानि शोकैः । त्वयैते निर्दग्धहृदया अस्मदमित्रा अन्धेन तमसा संसेव्यन्तामित्येतदाशास्महे[9] ।

अप्वा

‘ अग्नायी ’ (२८) अग्नेः पत्नी। ‘तस्या एषा भवति’ ॥ ३३[10] ॥

१ ग. च. ज. यदेतया. २ च. °पधीय°. ३ क. ख. घ. झ. ट. ठ. ड. °त्यत्र व्याख्याता । त°. ४ क. ख. ११ ( ३२ ); ठ. °वति । इति निरु० भाष्ये उ० तृ० द्वात्रिंशः खण्डः; ड. °वति । इति निरुक्तभाष्ये ३२ खण्डः; घ. झ. ट. ज. अङ्को नास्तिः. ५ छ. त. द. ‘ प्रज्ञानानि ’ नास्ति. ६ क. ख. १२ ( ३३ ); त. द. १२. ७ ग. °मिति । अ°. ८ क. ख. ध. झ. ट. ठ. ड. °यन्ती प्रत्येकं लोभयमाना गृ°. ९ क. ख. घ. झ. ट. ठ. ड. सचन्तां संसे°. १० क. ख. १२ ( ३३ ); ठ. °वति । इति निरुक्तभा० उ० तृतीये० ३३ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३३ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये (ऋ० सं० १ । २२ । १२ ) ॥ इति सा निगदव्याख्याता ॥ ३४ ॥

इति[2] नवमाध्यायस्य तृतीयः पादः ॥

इहेन्द्राणीमुपह्वय इति[3] । इह कर्मणि अग्नायीम् उपह्वये सोमपानाय आत्मनश्च स्वस्तये । इन्द्राणीम् । अपि च । वरुणानीम् । असाधारण्येन । इन्द्राणीं च वरुणानीं च अग्नायीं च इह कर्मण्युपह्वये सोमपानाय स्वस्तये चेत्येवं सति ' तस्या एषा भवति ' इति भाष्यवचनं[4] नोपपद्यते । सोमपानसंबन्धान्मध्यमेति चेन्नैतत् । अग्निरपि हि सोमपानसंबन्धे उक्तः ' सोम पिब मन्दसानो गणश्रिभिरिति ' तस्मात् ' उपपद्यते ' इति ( निरु० ८ । २[5]) ॥ ३४ ॥

अग्नायी

अस्यामृचि इन्द्राणीवरुणान्यौ स्तूयेते । तेन ' तस्या एषा भवति ' इति-वचनं नोपपद्यते

चतुर्दशस्य[6] तृतीयः पादः[7] ।

चतुर्थः पादः ।

अथातोऽष्टौ[8] द्वंद्वान्युलूखलमुसले उलूखलं व्याख्यातं मुसलं मुहुः सरं तयोरेषा भवति ॥ ३५ ॥

१ क. ख. १३ ( ३४ ); त. द. १३. २ ङ. थ. ध. ' इति॰ पादः ' नास्ति; छ. तृतीयः पादः; त. नवमस्य तृ॰; द. इति नैरुक्ते उत्तरार्धस्य नव॰. ३ क. ख. घ. झ. ट. इति । इति सा निगदव्याख्याता । इति॰; ग. इति । इह॰; ठ. ड. ॰न्द्राणीमिति । इति सा निगदव्याख्याता । इह॰. ४ क. ख. घ. झ. ट. ठ. ड. भाष्यकारवचन. ५ क. ख. १३ ( ३४ ); ग. च. वर्जमितरेष्वङ्को नास्ति. ६ ठ. ड. इति चतुर्दशाध्यायस्य तृ॰. ७ ठ ॰पादः । इति निरुक्तभाष्ये उ० तृ० चतुस्त्रिंशः खण्डः; ड. ॰पादः । इति नैरुक्तभाष्ये ३४ खण्ड . ८ क. ख. १(३५); त द. १.

‘ अथातोऽष्टौ द्वंद्वानि ’ इति । अश्वादेः पूर्वस्माद्वर्गाद्विलक्षणोऽयमपरो द्वंद्ववर्ग इति पृथगधिकारवचनम् । अथातःशब्दावुक्तार्थौ ( निरु० ७ । १ ) ।

**अष्टौ द्वंद्वानि**

अष्टाविति निर्देशतोऽपि सिद्धे द्वित्वे नियमार्थमष्टग्रहणम्[1] । ‘ उषासानक्ता दैव्या होतारा ’ इति द्वंद्वदर्शनादयुक्तमिति चेन्न । तयोराप्रीत्वसामान्येन तत्र[2] प्रथमं समाम्नातत्वात् ( निघ० ५ । २ ) । इह च पुनः समाम्नाने[3] द्विरुक्ततादोषप्रसङ्गः । मित्रावरुणादीनामपि द्वंद्वसामान्यादिह प्रसङ्ग इति चेन्न । तेषां पृथगपि स्तुत्युपपत्तेः । एवं सत्युलूखलमुसलयोर्द्यावापृथिव्योश्चेह समाम्नानस्याप्रसङ्गः । केवलयोः स्तुत्युपपत्तेः । न । मुसलस्य दिवश्च पृथक्स्तुत्यभावात् । मित्रावरुणादीनां तु सर्वेषां पृथक्स्तुतयः सन्ति । तस्मादसमाम्नानम् । अश्विनोरिह द्वंद्वसामान्यात्समाम्नानं प्राप्तमिति चेन्न । उषःप्रभृतीनामुषसः कालमध्ये । तेषां च समाम्नानेनेहातिसंकर[4]प्रसङ्गात् । शुनासीरयोः स्थानान्यत्वादिहासमाम्नानमिति चेन्न । द्वंद्वसामान्यात्पृथिव्यर्थत्वाच्च संभोगाभिप्रायेण च तत्स्तुतेः ‘ तेनेमामुपसिञ्चतम् ’ (ऋ० सं० ४ । ५७ । ५) इति । द्यावापृथिव्योः प्रथमं समाम्नानं देवताभावादिह प्राप्तमिति चेन्न । दिवः पृथिव्यायतनत्वाभावाद् द्वंद्वप्रसङ्गेन चेह दिवः समाम्नानानात् । द्यावापृथिव्यौ शुनासीरौ इति देवता अपेक्ष्य द्वंद्वमध्ये प्रथमागामित्वस्यावचनेम्[5] । उलूखलमुसलयोर्द्रव्यत्वात्प्रथमं समाम्नानम् । तयोः पृथिव्यायतन[6]स्य निरुपचारप्रसिद्धेः । प्रचुरत्वाच्च[7] तयोः । ‘उलूखलं व्याख्यातम्’ ‘ उरुकरम् ’ इत्येवमादिना (निरु० ९ । २० ) ।

**केषांचिदेव द्वंद्वानां समाम्नाने कारणम्**

**मुसलं कस्मात्**

मु[8]सलं कस्मात् । तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु । ‘ तयोरेषा भवति ’[9] ॥ ३५ ॥

१ क. ख. घ. झ. ट. ड. अष्टत्वनिय°. २ ग. च. ज. तत्प्रथ°. ३ ग. च. ज. ठ. ड. °म्नाते. ४ च. संवेर° वह; ज. संह्वर°. ५ क. ख. घ. झ. ट. ठ. ड. वचने उ°. ६ क. ख. घ. झ. ट. ठ. ड. °तनतास्य. ७ घ. झ. ट. °त्वाच्च। उलूखलं व्याख्यातम् । तयोर्द्वन्द्वयोरुलूखलं व्या°. ८ घ. झ. ट. मुसलं मुहुः सरम् । तयोरेषा भवति । मुसलं कस्मात्°. ९ क. ख. ९(३५); ठ. °वति । इति निरु० उ० तृ० ३५ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३५ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

आयजी वाजसातमा ता ह्यु[1] १ च्चा विजर्भृतः । हरी इवान्धांसि बप्सता ( ऋ० सं० १।२८।७ )॥ आयष्टव्ये अन्नानां संभक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने हविर्धाने[2] हविषां निधाने तयोरेषा भवति ॥ ३६ ॥

आयजी वाजसातमेति[3] । आभिमुख्येन मर्यादया वा यष्टव्ये पूज्ये वाजसातमे अन्नानां संभक्ततमे उच्चा विजर्भृतः

उलूखलमुसले उच्चैर्विह्रियेते । उलूखलमुच्छ्रीयते । अवहननाय मुसलमुद्यम्यते[4] । एतदुच्चैर्विहरणम् । ते एते नित्यमस्माकं गृहे हरी अश्वाविव नित्यमविच्छेदेन अन्नानि बप्सतौ[5] भुञ्जाने[6] संस्कारकत्वेन स्याताभित्येतदाशास्महे ॥

' हविर्धाने ( ३३ ) हविषां निधाने ' । सोमास्तयोर्निधीयन्ते[7][8] । तयोरेषा भवति[9][10] ॥ ३६ ॥

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ( ऋ० सं० २। ४१ ।२१ )॥ आसीदन्तु वामुपस्थमुप[11]स्थानमद्रोग्धव्ये[12] इति वा यज्ञिया देवा यज्ञसंपादिन इहाद्य सोमपानाय द्याव्यापृथिव्यौ[13] व्याख्याते तयोरेषा भवति ॥ ३७॥

१ छ. द ह्यु १ च्चा. २ क. ख. २ (३६); त. द. २. ३ ग. °मति । आ°. ४ ग. °द्यम्यमाने; ज. °द्यम्यते. ५ घ. झ. ट. बप्सतो. ६ ग. च. ज. भुञ्जाते. ७ घ. झ. ट. ठ. ड. सोमस्त°. ८ घ. झ. ट. ठ. ड. °धीयते. ९ घ. झ ट. °वति । तयोरेषा स्तुतिर्भवति; ट. ड. स्तुतिर्भवति. १० क. ख. २ (३६); ठ. °वति । इति निरु० उ० तृ० ३६ खण्डः; ड. °वति । इति नैरुक्तभाष्ये ३६ खण्डः; घ. झ. ठ. ड. अङ्को नास्ति. ११ क. ख. छ. त. द. °पस्थ उप°. १२ छ त. द. °स्थानं यज्ञि . १३ क ख. ३ ( ३७ ); त. द. ३.

हविर्धाने

आ वामुपस्थमद्रुहेति[1] । गृत्समदस्यार्षम् । द्यावा नः पृथिवी इति च । हविर्धान[2]प्रवर्तने[3] विनियोगः ( मैत्रा० सं० ३ । ८ । ७ ) । हे हविर्धाने अद्रुहा अद्रोग्धव्ये युवामुच्येथे । यत्र युवामुपगम्य स्थिते तत् वाम् उपस्थानं यज्ञियाः यज्ञसंपादिनो देवा इह एतस्मिन्कर्मणि अद्य उपगम्य सीदन्तु निषीदन्तु सोमपानायेत्येतदाशास्महे ।

' द्यावापृथिव्यौ ( ३१ ) व्याख्याते ' । द्यौश्च पृथिवी चेत्येते पदे व्याख्याते ( निरु० १ । १४ ) । ' तयोरेषो[4] भवति ' ॥ ३७[5] ॥

**द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ( ऋ० सं० २ । ४१ । २० ) ॥ द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छतां विपाट्छुतुद्र्यौ व्याख्याते तयोरेषा भवति ॥ ३८[6] ॥**

---

द्यावापृथिव्यौ

द्यावा नः पृथिवी इममिति[7] । द्यावापृथिव्यौ अस्माकं सिध्रं साधनम् इमं यज्ञं योऽयमस्मान्साधयति अद्य एतस्मिन्नहनि वर्तमानं दिविस्पृशं द्यां यः स्पृशति आपूरयति तमेवंगुणं[8]यज्ञं देवेषु नियच्छतां देवेभ्यो दत्तमित्येतदाशास्महे ।

' विपाट्छुतुद्र्यौ[9] ( ३२ ) व्याख्याते ' । ' विपाट् विपाटनाद्वा ' इत्यत्र विपाट् ( निरु० ९ । २६ ) व्याख्याता । ' शुतुद्री शुद्राविणी ' इत्यत्र शुतुद्री ( निरु० ९ । २६ ) । ' तद्यद् द्विवदुपरिष्टात्तद्व्याख्यास्यामः ' इत्येतत्[10] ( निरु० २ । २४ ) ॥ ३८ ॥

१ ग. हेति[32] । गृ°. २ ग. ज. °र्धाने. ३ ग. च. ज. °र्तते. ४ क. ख. घ. झ. ट. ठ. ड. °रेषा स्तुतिर्भवति. ५ क. ख. ३(३७); ठ. °वति । इति निरुक्तभा० उ० तृ० ३७ खण्डः; ड. °वति इति निरुक्तभाष्ये ३७ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ६ क. ख. ४ ( ३८ ); त. द. ४. ७ ग. °मिति[33] । द्या°. ८ क. ख. घ. झ. ट. ठ. ड. °गुणं य°. ९ घ. झ. ट. च. ज. °पाट् शुतु°. १० क. ख. ४ ( ३८ ); ठ. °तत् । इति नि० भा० उ० तृ० ३८ खण्डः; ड. तत् । इति निरुक्तभाष्ये ३८ खण्डः; घ. झ. ट. ज अङ्को नास्ति.

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने । गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ( ऋ० सं० ३ । ३३ । १ ) ॥ पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे[1] विपाट्छुतुद्र्यौ पयसा प्रजवेते आर्त्नी अर्तन्यौ वारण्यौ वारिषण्यौ वा तयोरेषा भवति ॥ ३९ ॥[2]

प्र पर्वतानामिति[3] । विश्वामित्रो ब्रवीति । ये चैते[4] विपाट्छुतुद्र्यौ पयसा उदकेन पूर्णे प्रजवेते प्रकृष्टेन जवेन गच्छतः पर्वतानाम् उपस्थात्[5] निर्झरान्मेघानां[6] वा उशती उशत्यौ[7] कामयमाने परस्परं समागमं समुद्रं वा । कथं प्रजवेते । अश्वे इव विषिते विमुक्ते मन्दुरातः । सादिभ्यो[8] वा । विषण्णे इति वा । विभागे वैकस्मि[9]न्युक्ते । कस्मिंश्चिद्युक्ते युगादौ वा । हासमाने स्पर्धमाने परस्परेण वा हर्षमाणे हृष्यमाणे । विपाट्छुतुद्र्यौ[10] विमुक्ते गावाविव शुभ्रे शोभने कल्याण्यौ मातरौ संरिहाणे वत्समेकं प्रलेढुमिच्छन्त्यौ य एवमेते प्रजवेते ते अस्माकं गाधे भवत इत्येतदाशास्महे ।

विपाट्छुतुद्र्यौ

‘ आर्त्नी ’ ( ३३ ) धनुःप्रान्ते । ते कस्मात् । ‘ अर्तन्यौ वा ’ । ऋतेर्धातोर्गत्यर्थस्य । गमयतस्ते इषून् । ‘ रेण्यौ[11] वा ’ । रेणार्हौ[12] । ‘ रिषण्यौ वा ’ । हन्त्र्यौ । ‘ तयोरेषा भवति ’ ॥ ३९ ॥[13]

आर्त्नी कस्मात्

१ छ. त. द. संमातरौ रिहाणे. २ क. ख. ५ ( ३९ ); त. द. ५. ३ ग. ’मिति[34] । वि॰. ४ च. वैते. ५ क. ख. घ. झ. ट. ठ. ड. °स्थात् उपस्थानात् नि°. ६ घ. झ. ट. ठ. ड. निर्भरा°. ७ च. ज. उशत्यौ. ८ ग. च ज. साहिभ्यो; ट. सादि भ्यो° हि न्यौ. ९ क. ख. घ. झ. ट. ठ. ड. °भागेनेक°. १० ग. च. ज. विराड्विमुक्ते. ११ ग. ज. चरण्यौ; च. षाचरण्यौ. १२ ग. ज. चरणार्थौ; च. रणार्थौ. १३ क. ख. ५ ( ३९ ); ठ. °वति । इति निरु० भा० उ० तृ० ३९ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३९ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

**ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ( ऋ० सं० ६ । ७५ । ४ ) ॥ ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून्त्संविदाने आर्त्न्याविमे विघ्नत्यावमित्राञ्छुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात्तयोरेषा भवति ॥ ४० ॥**

ते आचरन्ती समनेवेति[3] । आर्त्न्योरेवानुमन्त्रणमश्वमेधेऽनेन क्रियते

आर्त्नी

( मैत्रा० सं० ३ । १६ । ३ ) । समनेव योषा । समनसाविव एकभर्तृके योषिते यथैकं भर्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम् एवमाक्रेष्टारं प्रति ये नित्यमाचरन्त्यौ भवतः आनमन्त्यौ । मातेव पुत्रं बिभृतामुपस्थे । मातेव पुत्रं उपस्थे रक्षणार्थं ये बिभृतामाक्रेष्टारम् । अमुना प्रकारेण ये विस्फुरन्त्यौ[6] नित्यममित्रान् भवतः । ययोरेष स्वभावस्ते आर्त्नी नित्यमस्माकममुना प्रकारेण संविदाने संवादमिव कुर्वाणे परस्परतः । आकर्षणाभिप्रायमेतत् । आकृष्यमाणयोरेतयोः संवाद इव परस्परतो भवति । शत्रूनपाविध्यतामित्येतदाशास्महे ।

शुनासीरौ कस्मात्

' शुनासीरौ ' ( ३४ ) इत्यत्र शुनो वायुः । स हि क्षिप्रमेत्यप्रतिबध्यमानोऽन्तरिक्षे । ' सीर आदित्यः सरणात् ' । स हि नित्यं सरति गच्छति । ' तयोरेषा भवति ' ॥ ४०[8] ॥

१ छ. त. द. °स्थानेऽप शत्रून्विध्यतां संवि°. २ क. ख. ६ (४०); त. द. ६. ३ ग. °वेति । आ°; ठ. ड. °चरन्तीति. ४ घ. झ. ट. ठ. ड. °माक्रष्टार°. ५ च. °येनमाच°. ६ ग. ज. विष्फुर°; च. विस्फर°. ७ क. ख. घ. झ. ट. ठ. ड. शुनासीरो शुनो वायुः शु एत्यन्तरिक्षे । शुना°. ८ क. ख. ६ (४०); ठ. °वति । इति नि० उ० तृ० ४०; ड. °वति । इति नि० उ० तृ० ४० ढ. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये एकचत्वारिंशः ४१ खण्डः; थ. झ. ट. ज. अङ्को नास्ति.

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः । तेनेमामुप सिञ्चतम् ( ऋ० सं० ४ । ५७ । ५ ) ॥ इति सा निगदव्याख्याता देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहोरात्रे इति[2] वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति ॥ ४१ ॥

शुनासीराविति[3] । वामदेवस्यार्षम् । शुनासीर्ये विनियोगः ( आश्व० श्रौ० २ । २० ) । हे शुनासीरौ युवां वाचमिमां मम स्तुतिलक्षणां जुषेथां सेवेथाम् । कथं पुनरासेवितेयं युवाभ्यां स्यात् । यद्दिवि चक्रथुः पयः । यत् दिवि द्युलोके चक्रथुः संभरथो युवां पयः उदकं तेन इमां पृथिवीम् उपसिञ्चतम् । एवमनेनास्मद्वागासेविता युवाभ्यां भविष्यतीति ।

शुनासीरौ

'देवी[6] जोष्ट्री[7] ( ३५ ) देव्यौ जोषयित्र्यौ' । सर्वस्य तर्पयित्र्यौ । के पुनस्ते इति । 'द्यावापृथिव्यौ अहोरात्रे वा । सस्यं च समा चेति कात्थक्यः[8]' । सस्यं व्रीह्यादि समेति संवत्सरः । 'तयोरेष संप्रैषो भवति' ॥ ४१ ॥

के देवी जोष्ट्री

देवी[10] जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि युयवदान्यावक्षद्वसु[12] वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज

१ छ. द. काछक्य°; त. कार्छक्य° थ. २ क. ख. ७ (४१); त. द. ७. ३ क. ख. घ. झ. ट. ठ. ड. °विति । इति सा निगदव्याख्याता । वा°; ग. °विति । वा°. ४ ग. च. ज. °मां म स्तु°. ५ क. ख. घ. झ. ट. ठ. ड. कथं च पु°. ६ ध. झ. ट. देवी जोष्ट्रीत्यादि भवतीत्यन्तं निरुक्तमूलावतरणं ततो देवी जोष्ट्रीत्यादि; ठ. ड. देवी जोष्ट्री देव्यौ जोषयित्र्याविति । देवी°. ७ घ. झ. ट. ठ. ड. जोष्ट्रीति देव्यौ°. ८ ग. घ. झ. ट. काछक्यः; च. कांथक्यः° कात्थ; ज. काथक्यः. ९ क. ख. ८ ( ४१ ); ट. °वति । इति निरु० भाष्ये उ० तृ० ४१ खण्डः; ड. °वति । इति निरुक्तभाष्ये ४१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. १० छ. त. द. जोष्ट्री. ११ ड. थ. ध. ट. द. युय°. १२ छ. त. द. °वेक्षद°.

( मैत्रा० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ) ॥

देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधिती[1] वसुधान्यौ ययोरन्याघानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वरणीयानि[2] यजमानाय वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषो देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति[3] ॥ ४२ ॥

देवी जोष्ट्री इति[4] । देव्यौ जोषयित्र्यौ वसूनां[5] निधानभूते ययोः देव्योः अन्या एका अघानि द्वेषांसि घ्नन्ति[6] यान्यप्रियाण्य[7]स्माकं तानि यूयवत्[8] अवयावयति अवामिश्रयति[9] नाशयत्यस्मत्तः । अन्या पुनः आवक्षत् आवहति[10] वसु वार्याणि वरणीयानि[11] यजमानाय यानि वसूनि वसुवने[12] वसुवेयस्य वसुवननाय च संभजनाय अभुक्तातिशिष्टस्य[13] विधानाय[14] चेति । ते देव्यौ जोषयित्र्यौ[15] अस्य पृषदाज्यस्य स्वमंशं वीतां पिबेतां कामयेतां वा । यजेति संप्रैषः[16] ॥ ४२ ॥[17]

---

देवी ऊर्जाहुती इषमूर्जमन्यावक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः[18] स्याम पुराणेन[19] नवं तामूर्जमूर्जाहुती ऊर्जयमाने

१ छ. त. द. 'वसुधिती' नास्ति. २ क. ख. त. थ. द. वननीयानि; छ. वरणीननी. ३ क. ख. ९ ( ४२ ); त. द. ९. ४ ग. इति[37] । दे°. ५ क. ख. व. झ. ट. ठ. ड. वसुधिती वसू°. ६ क. ख. घ. झ. ट. ठ. ड. हन्ति. ७ ग. ज. या अपि°; च. या अन्यपि°. ८ ग. न्ययूयवन्; च. युयवन्; न्ययुयवान्. ९ ग. ज. अवसाव°. १० ग. ज. 'हाति आवहाति वसु°; च. आवहाति आवहाति. ११ क. ख. घ. झ. ट. ठ. ड. यजमानाय वरणीयानि. १२ ग. च. ज. 'वसुवने' नास्ति. १३ ग. च. ज. अभु°. १४ क. ख. निधा°; च. विधा° नि. १५ ग. ज. °यित्र्यौ वस्य; च. °यित्र्यौवस्य° त. १६ क. ख. घ. झ. ट. ठ. ड. संप्रैष इत्यनन्तरं निरुक्तमूलात् देवी ऊर्जाहुतीत्यादि भवतीत्यन्तमवतरणम्. १७ क. ख. ९ ( ४२ ); ग. च. वर्जमितरेष्वङ्को नास्ति. १८ ड. थ. ध. 'माना स्याम°. १९ छ. त. पराणेमं नवं ताम्; ध. पुराणेनं नवं.

अधातां[1] वसुवने वसुधेयस्य वीतां यज (मैत्रा० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ) ॥ देवी ऊर्जाहुती दैव्या ऊर्जाह्वान्यावन्नं च रसं चावहत्यावहत्[2]यन्या सहजग्धिं[3] च सहपीतिं[4] चान्या नवेन पूर्वं दयमानाः[5] स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषो यजेति संप्रैषः ॥ ४३[6] ॥

देवी[7] ऊर्जाहुती दैव्या ऊर्जाह्वान्यौ[8] ऊर्जस्य[9] अन्नस्य निष्पादयित्र्यौ[10] ।

देवी ऊर्जाहुती — द्यावापृथिव्यावूर्जाह्वान्यावुच्येते । इषमूर्जमन्या एकावक्षत् । इषं च अन्नादि रसं च तदुपसेचनं[11] क्षीरादि[12] । किंच । एका उपनामि[13]तस्यान्नस्य सगुणस्य सग्धिं संपीतिमन्या[14] सहभोजनं[15] बन्धुभिरिति आवक्षत् । आभिमुख्येन यथा बन्धुभिः सह भुञ्जीमहि तथा करोतु । तथा च[16] बह्वन्नमस्तु यथा नवेन पूर्वम्[17] पुराणं देय-[18]माना रक्षन्तः[19] स्याम । पुराणेन नवं पुराणेन च नवम्[20] । तामेवंलक्षणम् ऊर्जम् ऊर्जाहुती[21] ऊर्जयमाने बलवतीमूर्जतां[22] च कुर्वाणे अधातां दत्तां वसुवने वसुवननाय च वसुधेयस्य वसुधानाय च । वीतां पिबेतां कामयेतां वा । 'यजेति संप्रैषो यजेति संप्रैषः' ॥ ४३[23] ॥

१ ङ. अधातां; छ. त. अधीतां, थ. अधातां. २ छ. त. द. 'आवहति सक्त-देव. ३ छ. त. द. सहसग्धिं. ४ छ. त. द. सहसपीतिं. ५ ङ. थ. ध. °माना स्याम. ६ क. ख. १० ( ४३ ); त. द. १०. ७ घ. झ. ट. मैत्रावरुणो ब्रवीति । हे होतस्त्वमेते देवी°; ठ. ड. देवी ऊर्जाहुतीति । मैत्रा० देवी°. ८ ग. °ह्वान्यौ । ऊ°. ९ घ. झ. ट. ठ. ड. ऊर्जोऽन्नस्य. १० ग. च. ज. निःपाद°. ११ ग. च. ज. 'तद्' नास्ति. १२ ग. च. ज. °रादिकं च । एका°. १३ ग. च. ज. ठ ड. नागमि°. १४ ग. च. ज. सपीतीति ( च. सपीतीति ) मन्या°. १५ ग. च. ज. सहभोज्यं सहभुञ्जी°. १६ क. ख. घ. झ. ट ठ. ड. च तत् ब°. १७ ग. च. ज. पूर्व्यं. १८ च. ज. देय°. १९ ग. च. ज. दक्ष°. २० क. ख. झ. नवं धान्यं दयमानाः स्याम । ता°; घ. ट. नवं धन्यं दयमा रक्षन्तः नः स्याम । ता°; ठ. ड. नवं धान्यं दयमानाः रक्षतः । नः स्याम ता°. २१ ग. च. ज. 'ऊर्जाहुती' नास्ति. २२ ग. च. ज. °मूर्जिव्हां च°. २३ क. ख. १० ( ४३ ); ठ. ड. ४३ ( ठ. '४३' नास्ति ) । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये चत्वारिंशः खण्डः ४३; ग. घ. वर्जमितरेष्वङ्को नास्ति.

[1]जम्बूमार्गाश्रम[2]निवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ[3] चतुर्दशोऽध्यायः [4]समाप्तः ।

* अथ[1]यान्यश्वो + वो[2]ह्ळामानो[3]मित्रः क[4]निक्रदद्द्र[5]वदसं[6]वत्सरमुपँ[7] = प्लवद[8]मावपा[9]मैतेवदन्त्व[10]मैन्द्रान्य[11]ङ्गसंयोगाद्[12]वनेस्पत[13]उपश्वासयबह्वी[14]नाम[15]हिरिव भोगैरथे[16]तिष्ठन्[17]धन्वनागावक्ष्[18]यन्तीवसु[19]पर्णवस्तआज[20]ङ्घंति य[21]च्चिद्धित्वं[22]वृषभो[23]न्यक्रन्द[24]मित्रमं[25]तापितु[26]न्विममं [27]आपोहिया[28]ओषधारा[29]रोऽयर[30]ण्यानिश्रद्[31]धेयास्[32]योनामी[33]पामिहे[34]न्द्राणीमथातो[35]ष्ठावा[36]यजीआवा[37]मुपस्थंग्रावा[38]नःमघवे[39]तानांते[40]आचरन्तीशु[41]नासीरादेवीजो[42]ष्ट्रीदेवी[43]ऊर्जाहुतीत्रिचत्वारिंशत् ⸸ ॥

[5]इति निरुक्ते ( उत्तरषट्के ) तृतीयोऽध्यायः ॥ ३ ॥



१ ग. ठ. ड. इति जम्बू°. २ क. ख. घ. झ. ट. ठ. ड. °मार्गाश्रमवासि°; ग. ज. मार्गानिवा°. ३ ठ. ड. °रुक्तटीकायां निवण्टाध्यायपञ्चकेन सह नैरुक्तचतु. ४ ग. °ध्यायः । खण्डः ॥ पादः ॥ ४ । मन्त्र ३८ सं ४२५; घ. झ. ट. 'समाप्तः' नास्ति; ठ. समाप्तिमगमत्. * ठ. ड. अथ खण्डानुक्रमणी । अथ° ( ड. °क्रमणिका ). + घ. वोल्हा. = क. ख. ठ. ड. °पप्रव°. ⸸ छ. त. द. खण्डशृङ्खला नास्ति. ५ ड. इति नैरुक्ते°; छ. इति निरुक्ते नवमोऽध्यायः; त. नवमोऽध्यायः समाप्तः; द. इति नैरुक्ते उत्तरार्धस्यनवमाध्यायस्य चतुर्थः पादः । इति नवमोऽध्यायः.

## अथ दशमाध्यायस्य

### प्रथमः पादः ।

ॐ[1] ॥ अथातो मध्यस्थाना देवतास्तासां वायुः प्रथमागामी भवति वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मण एतेरिति स्थौलाष्ठीविरनर्थको वकारस्तस्यैषा भवति ॥ १ ॥

---

व्या[2]ख्यातानि पृथिवीस्थानदेवतापदानि । अधुना समाम्नायानुक्रमेणैव मध्यमस्थानदेवतापदानि वक्तव्यानि । तदर्थमिदमारभ्यते । ‘ अथातो मध्यस्थाना देवताः ’ इति । ‘ अथ ’शब्दो विशेषाधिकारार्थः । ‘ अतः ’शब्द आनन्तर्यार्थः । मध्यं[3] स्थानमेतासामिति मध्य[4]स्थाना देवता वाय्वाद्याः । वक्ष्यन्ते इति वाक्यशेषः । देवता इति बहुवचनं भेदपक्षे । एकैव नैरुक्तानां देवता त्रि[5]त्वाभ्युपगमात् ( निरु० ७ । ५ ) । एतस्यैव मध्यमस्य पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि गुणविशेषतो भवन्ति यथैवोत्तमस्य ज्योतिषो दृश्यन्ते सवितृभगप्रभृतीनि । ‘ तासां वायुः ( निघ० ५ । ४ । १ ) प्रथमागामी भवति ’ । नन्विन्द्र इति मध्यमस्य[6] मुख्यमभिधानम् । तत्प्रथमं समाम्नातव्यमासीत् । न ।

**वायुः किमिति प्रथमः**

मध्यमस्य वर्षकर्मोपलक्षणत्वाद्वर्षकर्मणि च वायोरधिकारः प्रथमः स्यात् । कथमिति । वाय्वात्मनैव हि मध्यम ऊर्जान्मासात्परतः सार्वदिकमुदकमु[7]संहरन्नोषधिवनस्पतिजलाशयेभ्य उदकमन्तरि[8]क्षलोकस्य गर्भमुपाचिनोति । स मासाष्टकेन संभृतोदकगर्भो विपक्वः प्रावृषं प्राप्य प्रसवाय प्रकल्पते । तदुक्तम् । ‘ वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे । ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति ’ ॥ इति । तदेवं वर्षकर्मप्रारम्भे वाय्वात्मनैव मध्यमो

१ ङ. ठ. ड. हरिः ओम्; थ. ओ ३ म्; ध. हरिः ॐ म्; छ. नुं. २ ग. ज. नुं नमः । व्या°; च. श्रीगणाधिपतये नमः । व्या°; घ. ट. श्रीः । व्या°; झ. ट. ड. श्रीगणेशायनमः । व्या°. ३ ग. च. ज. ठ. ड. मध्यस्था°. ४ ग. च. ज. ठ. ड. मध्यमस्था°. ५ ग. च. ज. तृत्वा°. ६ क. ख. घ. झ. ट. ठ. ड. °मस्य स्थानस्य मु°. ७ च. °मुपहृत्नो°. ८ च. °रिक्षजलो°.

व्याप्रियत इति युक्तं वाय्वभिधानमिह प्रथमं समाम्नातमिति । इतश्च युक्तं यदुच्यते 'तासां वायुः प्रथमागामी भवति' इति । स एष संभृतोदकगर्भो वायुर्विवृण्वन्मेघजालेन नभो मध्यमो वरुणः संपद्यते । ततो रुदद्रुद्रः । तत इरां ददिन्द्रः । ततो रसान् प्रार्जयन्पर्जन्यः । एवमादिर्मध्यमस्य जगदनुग्रहाय वर्षप्रदानसिद्धये गुणोपजनक्रमः । अनयैव गुणोपजनक्रमानुपूर्व्या वायुर्वरुणो रुद्र इन्द्रः पर्जन्य इत्येवमाद्या समाम्नाये देवतानामानुपूर्वी । तदेतत्स्फुटं द्युस्थाने गुणान्तरोपजनानुपूर्व्यं ज्योतिर्मण्डलस्य सवितृप्रभृतिषु ।

'वायुः' कस्मात् । 'वातेः' । 'वा गतिगन्धनयोः' (धा० २ । ४०) इत्यस्य । सततमसौ वाति गच्छति । 'वेतेर्वा स्याद्गतिकर्मणः' । अनेकार्थो वेतिः । तस्य वा गतिकर्मणो गत्यर्थस्य । 'एतेरिति स्थौलाष्ठीविः' ।

वायुः कस्मात्

अस्मिन् पक्षे 'अनर्थको वकारः' । उपजनमात्रम् । एत्यसौ इति वायुः । 'तस्यैषा भवति'[3] ॥ १ ॥

---

**वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवंम् ( ऋ० सं० १ । २ । १ ) ॥ वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब शृणु नो ह्वानमिति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥ २ ॥**

वायवायाहि दर्शतेति । मधुच्छन्दस आर्षम् । आध्वर्यवे वायव्योपस्थाने

वायुः

विनियोगः । बाह्वृच्ये प्रउगे शस्यते ( ऐ० ब्रा० ३ । १ ॥ आश्व० श्रौ० ५ । १० ) । हे वायो दर्शत दर्शनीय दर्शनार्ह त्वदर्थम् इमे सोमा अस्माभिः अलंकृताः । पर्याप्ताः अरंकृताः । पातुं संस्कृताः । स त्वमस्माकमिदम् आह्वानं श्रुधि शृणु । श्रुत्वा च तत आयाहि । एत्य च एतेषां सोमानां यः स्वोंऽशस्तत्र तं पाहि पिबेत्येतदाशास्महे ।

---

१ ग. ज. वरुद°; च. वरुद्रः; ट. ड. रुदतीति रुद्रः. २ च. 'तस्यैषा भवति' नास्ति. ३ ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये प्रथमः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ छ. त. द. °वक्षत्त°. ५ ठ. ड. याहीति. ६ ग. °तेति । म°. ७ क. ख. घ. झ. ट. °गे शस्त्रे श.

वायोः सर्वस्थानतामपेक्ष्य विचारमागूर्य ततोऽवधारयति । सर्वस्थानत्वेऽपि सति 'कमन्यम्' इन्द्रात् 'मध्यमादेवमवक्ष्येत्' मन्त्रदृक् । सोमा अरंकृतास्तेषां निबोति प्रसिद्धं हीन्द्रस्य मध्यमस्य सोमपानं तदर्थत्वात्सोमसंस्कारस्याप्रसाध्यमन्यस्य । तस्मादिन्द्र एव वायुः । 'तस्य' इन्द्रस्य वायोरैन्द्रे एव सूक्ते यस्या[3]मिन्द्रस्य विशेषणत्वेन वायुशब्दस्तथा 'एषापरा' ऋक् 'भवति' ॥ २ ॥

**आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः । अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत् ( ऋ० सं० ६ । ३७ । ३ ) ॥ आसस्वांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च श्रव इत्यन्ननाम श्रूयत इति सतो वायोश्चास्य भक्षो यथा न विदस्येदितीन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्मोभयप्रधानेत्यपरं वरुणो वृणोतीति सतस्तस्यैषा भवति ॥ २ ॥**

आसस्राणास इति । भरद्वाजस्यार्षम् । महाव्रते महदुक्थे शस्यते उत्तरे पक्षे ( ऐ० आ० ५ । २ । २ ) । वायुरिन्द्र एव । तस्य रथ्या अश्वाः सुचक्रे कल्याणचक्रे रथे योगार्थम् इन्द्रं शवसानम् अच्छ इन्द्रमभिबलायमानमधिकबलमात्मानं मन्यमानम् आसस्राणा आससृवांसः नित्यमासर्पन्ति । एतान्युक्त्वा रथेऽस्माकमायाहि सोमपानाय यज्ञमिति । किमस्माकं तं कुर्वन्त्विति । अभि श्रव ऋज्यन्तो वहेयुः । ऋजुगामिनो भूत्वा श्रवः अन्नं सोमाख्यमेतदस्मद्यज्ञे यत् नू चित् नवं पुराणं च तत्पानायैनमिन्द्रमभिवहेयुः । नु क्षिप्रम् । यथा अस्य इन्द्रस्य वायोरिदम् अमृतम् एष सोमभक्षो न विदस्येत् । अविदस्तेऽनुपक्षीणे एतस्मिन्सोमभक्षेऽभिवहेयुरित्येतदाशास्महे ।

१ ग. च. ज. °वक्षत्. २ ग. च. ज. मध्यमध्यमस्य. ३ ठ. ड. °वति । इति चतुर्थाध्याये २ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ छ. त. द. वोल्हार°. ५ ग. इति[3] । भ°. ६ च. भार°. ७ क. ख. ग. ज. व. झ. ट. ठ. ड. °न्ति । ये तान्यु°.

‘ श्रव इति ’ एतत् ‘ अन्ननाम ’ । तद्धि सर्वत्र ‘ श्रूयते ’ । ‘ नू चित् ’ इति नवपुराणाभिधायकौ निपातौ ( निरु० ४ । १७ ) । नवं यः सोमो गृहीत्वा तत्कालमेव हूयते । पुराणं पुनर्यः प्रातःसवने गृहीत्वा माध्यंदिने सवने हूयते तृतीयसवने वा । तद्यथा । अतिग्राह्याः ( मैत्रा० सं० ४ । ७ । ३ ) । ध्रुवः ( मैत्रा० सं० ४ । ६ । ६ ) ।

एवमेतस्मिन्मन्त्रे ऐन्द्रसूक्तमध्यपातित्वादिन्द्रप्रधाने यद्वाय्वभिधानं तत् ‘ नैघण्टुकम् ’ इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् । ‘ इत्येके ’ । ‘ अपरे ’ पुनः ‘ उभयप्रधाना ’ इयमृक् ‘ इति ’ मन्यन्ते भेदपक्षवादिनः । तत्पुनरयुक्तं निष्केवल्ये विनियोगात् ।

अस्यामृचि वायुर्नैघण्टुक इन्द्रः प्रधानमित्येकं मतम् । उभौ प्रधाने इत्यपरम् ।

‘ वरुणः ’ ( २ ) कस्मात् । ‘ वृणोतीति सतः ’ । स हि वियद्वृणोति मेघजालेन । ‘ तस्यैषा भवति ’ ॥ ३ ॥

वरुणः कस्मात्

---

नीचीनवारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् । तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ( ऋ० सं० ५ । ८५ । ३ ) ॥ नीचीनद्वारं वरुणः कवन्धं मेघं कवनमुदकं भवति तदस्मिन्धीयत उदकमपि कवन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतं च प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिं तस्यैषापरा भवति ॥ ४ ॥

नीचीनवारमिति । अत्रेरार्षम् । न्यक् अच्यते द्वारं यस्य स भवति नीचीनद्वारः अधोद्वारः । तं नीचीनद्वारम् अधोबिलं कृत्वा कवन्धं मेघं वरुणो मध्यमः अत एव मेघसंबन्धात् कवनम् उदकं प्रससर्ज प्रसृजति महत्त्वेन ।

वरुणः

१ ठ ढ. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये तृतीयः ( ठ. ३ ) खण्डः; घ. झ. ट. ज. अङ्को नास्ति. २ क. ख. ङ. थ. ध. कवन्धं. ३ क. ख. ङ. कवन्धं. ४ ग. °मिति । अ°; ढ. °चीनवार°. ५ क. ख. व. झ. ट. नीचीनद्वार°. ६ क. ख. झ. ट. कबन्धं.

न ह्यर्महानेतच्छक्नुयात्कर्तुम्[1] । रोदसी अन्तरिक्षम् । द्यावापृथिव्यौ च अन्तरिक्षं च महत्त्वेन सर्वमापूरयिष्यन्निव । ततोऽतिप्रभूतेनोदकेन[2] विसृष्टेन विश्वस्य भुवनस्य भूतजातस्योदकस्य वा राजा ईश्वरः यवं न यवमिव कश्चित्सत्कर्षी स्वल्पं वृष्ट्या व्युनत्ति विविधमुनत्ति क्लेदयति भूमिं कृत्स्नां यः सोऽस्माकमिदं नाम करोतु ।

ऋचोऽन्योऽर्थः

अथैवेवमन्यथा[3] योज्यम् । प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च प्रकर्षेण सृजत्युत्पादयति । महत्त्वेन यस्माच्चोत्पादयति स[4] तस्माद्भुवनस्य राजा विश्वस्य भुवनस्य भूतजातस्य । तेन हेतुना तदनुग्रहाय नीचीनद्वारमधोबिलं मेघं कृत्वा यवमिव वृष्ट्या व्युनत्ति भूमिमिति समानं पूर्वेण ।

कबन्धः

'कबन्धः[5]' इति मेघ उच्यते । कस्मात्सः[6] । 'कवनमुदकं' कवतेर्गत्यर्थस्य । 'तदस्मिन्धीयते' इति कबन्धो[7] मेघः । 'उदकमपि कवन्धमुच्यते'[8] । तत्कस्मात् । अत्रोत्तरं पदं प्रथमं निराह । 'बन्धिः'[9] धातुः 'अनिभृतत्वे' । निभृतस्तावदचपलः । तद्विपरीतार्थवाची बन्धिः[10] । कं च तच्चपलं चेति कबन्धम् । सुखं चानवस्थायि चेत्यर्थः ।

'तस्य' वरुणस्य मध्यमत्वे 'एषापरा भवति[11]' । सा पुनः किमर्थम् । वर्षकर्म वरुणाभिधानं च सूर्येऽपि दृष्टम् । उत्तरस्यां तु[12] शब्दत एव मध्यमो वरुण इति विशेषहेतुनोपपादयति[13] ॥ ४ ॥

---

**तमू षु समना गिरा पितॄणां च मन्मभिः । नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ( ऋ० सं० ८ । ४१ । २ ) ॥ तं स्वभिष्टौमि समानया[14] गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रश-**

१ ग. च. ज. °महनैत°. २ क. ख. घ. झ. ट. ठ. ड. °भूतोद्रेकेन. ३ क. ख. ग. च. अथ चैव°; ज. अथ त्वेव. ४ क. ख. घ. झ. ट. ठ. ड. तस्मात्स एव भुव°. ५ क. ख. घ. ट. कवन्धं°. ६ क. ख. घ. झ. ट. कस्मात् । क°; च. कस्मात्स नः । क°. ७ क. ख. च. घ. झ. ट. कवन्धो°. ८ ग. च. ज. कबन्ध उच्य°. ९ घ. च. ज. झ. वन्धि°. १० घ. च. वन्धिः. ११ क. ख. घ. झ. ट. ठ. ड. ऋग्भवति. १२ च. °स्या उद् श°. १३ ठ. ड. °वति । इति निरुक्तभाष्ये ४ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. १४ छ. त. द. समान्या.

स्तिभिर्ऋषिर्नाभाको बभूव यः स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति । नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पा रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकं यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकं तस्यैषा भवति ॥ ५ ॥

**स एव वरुणः**

तम् षु समनेति । नाभाकस्यार्षम् । 'सु' इत्येतस्योपसर्गस्य संबन्धि क्रियापदं नास्तीति 'तं स्वभिष्टौमि' इत्यभिपूर्वं क्रियापदमध्याह्रियते । सुष्ठु तमभिष्टौमि । केन । समना । तत्समानया तद्योग्यया गिरा स्तुत्या । पितॄणां च मन्मभिः । ये च पितॄणां मननीया मननार्हा बहुमानाः स्तोमास्तैश्चाहमभिष्टौमि । नाभाकस्य प्रशस्तिभिः । याश्च मम नाभाकस्य प्रशस्तयः स्तुतयो योग्यास्तं वरुणं प्रति ताभिरभिष्टौमि । किंलक्षणो यो वरुणः । यः सिन्धूनामुपोदये स्यन्दमानानाम् अपाम् उपोदये उपोद्गमे अन्तरिक्षलोके वर्षस्य सप्तस्वसा संपद्यते मध्यमाभिरश्वाद्याभिः सप्तभिः वाग्भिः । 'स मध्यमः' इति वरुणो निरुच्यते शब्दत एवैतस्मिन्मन्त्रे । तदनुग्रहादस्माकं नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे । अन्ये एव अन्यके । शत्रवः । ते मा भूवन्नस्माकमिति ।

**रुद्रः कस्मात्**

'रुद्रः' (३) कस्मात् । 'रौतीति सतः' । स हि स्तनयित्नुशब्दं करोति । 'रोरूयमाणो द्रवतीति वा' । शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति । 'रोदयतेर्वा' । शत्रूनसौ रोदयति दुःखयति । ब्राह्मणमपि च[3] भवति । 'यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकम्' । कठानां प्रवचनम् । ऐतिहासिकैरेतत्समवैति । 'स किल पितरं प्रजापतिमिषुणा विध्यन्तमनुशोचन्नरुदत्तद्रुद्रस्य रुद्रत्वम्' । 'यदरोदीदिति हारिद्रविकम्' । स एवार्थः । केवलं तु शाखान्तरमन्यत् । एवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराण्युपेक्ष्याणीत्युपप्रदर्शनार्थम् । हारिद्रवो नाम मैत्रायणीयानां शाखाभेदः । तस्यैषा भवति ॥[4] ५ ॥

१ ग. नेति । ना°. २ ग. च. ज. 'स्तैः स्वाह°'. ३ क. ख. घ. झ. ट. ठ. ड. चैतस्मिन्नर्थे भ°. ४ ठ. ड. °वति । इति निरुक्तभाष्ये ५ खण्डः; घ. झ. ट. ञ. अङ्को नास्ति.

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने । अषाह्ळाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ( ऋ० सं० ७।४६।१ ) ॥ इमा रुद्राय दृढधन्वने[2] गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः[3] सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु नस्तिग्मं तेजतेरुत्साहकर्मण आयुधमायोधनात्तस्यैषापरा भवति ॥ ६ ॥

इमा रुद्रायेति । वसिष्ठस्यार्षम् । उत्तरा च । शूलगवे विनियोगः ( आश्व० गृ० ४।१०।२१ ) । हे स्तोतारो यूयमुच्यध्वे । इमा गिरः स्तुतीः भरत रुद्राय । किंलक्षणाय । स्थिरधन्वने दृढधनुषे क्षिप्रेषवे शीघ्रेषवे देवाय दानादिगुणयुक्ताय स्वधाव्ने स्वधावते अन्नवते अषाह्ळाय अनभिभूताय केनचित् सहमानाय नित्यमभिभवते शत्रून् वेधसे विधात्रे तिग्मायुधाय तीक्ष्णायुधाय । स चेमा गिर उच्यमानाः शृणोतु अस्माकमित्येतदाशास्महे ।

रुद्रः

'सहमानाय' इति बल्कृतेर्मध्यमः । 'तस्यैषापरा भवति' । सा पुनः किमर्थम् । 'विधात्रे' इत्युक्तं पूर्वस्यामृचि । तत्रैतद्भवति किमसौ विधत्त इति । यतः परया निर्ब्रवीति रक्षःपिशाचानिति[6] ॥ ६ ॥

रुद्रो मध्यमो बल्कृतः

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः । सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ( ऋ० सं० ७।४६।३ ) ॥ या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि दिद्युद्द्योतेर्वा द्युतेर्वा द्योततेर्वा क्ष्मया चरति क्ष्मा पृथिवी तस्यां

१ छ. त. द. अषाल्हाय. २ छ. त. द. दृल्हध°. ३ क. ख. °षाढायान्नैःसह;° छ. त. द. °षाल्हायान्नैः सह°; थ. °षाळ्हायान्यैः. ४ ग. °येति । व°. ५ ग. न. ज. व. अषाल्हाय. ६ ठ. ड. °निति । इति निरुक्तभाष्ये षष्ठः खण्डः; व. झ. ट. ज. अत्र नास्ति. ७ छ. त. द. 'श्वो नेमा' नास्ति.

**चरति तया चरति विक्ष्मापयन्ती चरतीति वा परिवृणक्तु नः सा सहस्रं ते स्वाप्तवचन भेषज्यानि मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषस्तोकं तुद्यतेस्तनयं तनोतेरग्निरपि रुद्र उच्यते तस्यैषा भवति ॥ ७ ॥**

या ते दिद्युदवसृष्टेति[1] । हे[2] भगवन् रुद्र या ते तव दिद्युत् आयुधं ज्वरातीसारादिरोगाख्यं येन प्राणिनो हंसि[3] दिवस्परि द्युलोकादधि त्वया अवसृष्टा चरति । सर्वत्र हि देवता द्युस्थानेति गम्यते दिवस्परीति लिङ्गात् । कर्माधिकारस्थानानि तु विशिष्टानीति तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति । अत एवोक्तमग्न्यधिकारे ' द्युस्थानो भवति ' ( निरु० ७ । १५ ) इति । कथं या चरति दिद्युत् । क्षमया पृथिव्या व्रीह्यादिभावमुपगतया । तस्यां वा[4] व्रीह्यादिभावमुपगतायां पृथिव्यामनुप्रविश्य चरत्यन्नपानसमुद्भूता तत्प्रभवत्वात्सर्वरोगाणाम् । तदुक्तम् । ' नमोऽस्तु रुद्रेभ्यो ये के च पृथिव्यां येषामन्नमिषवः[5] ' ( य० वा० सं० १६ । ६६ ) इति । तस्याः किं दिद्युतः । सा व्रती प्राणिनः अस्मान् परिवृणक्तु परिवर्जयतु नः । किमन्यदस्तु त्वत्तोऽस्माकम् । सहस्रं ते स्वपिवात भेषजा । हे स्वपिवात स्वाप्तवचन कस्यचिदप्यनतिक्रमणीयाज्ञ यानि तव सहस्रं भेषजानि यैर्बहुभिः बहुप्रकारम् भेषजं करोषि भक्तानां तान्यस्मान् प्रति सन्तु । किंच । मा नः अस्माकं तोकेषु पुत्रेषु तनयेषु पौत्रेषु च रीरिषः । हिंसां[6] मा प्रयुङ्क्ष्वेत्येतदाशास्महे ।

तस्यैव रुद्रस्य

' दिद्युत् द्यतेर्वा ' अवखण्डनार्थस्य । ' द्युतेर्वा ' दीप्त्यर्थस्य ।

दिद्युत् कस्मात्

' विक्ष्मापयन्ती चरतीति वा ' । हिंसन्ती चरतीति वा । ' तोकम् ' इति पुत्रः । स हि

तोकं च

नित्यं पित्रा विनयता तुद्यते इदं कुर्विदं मा कार्षीरिति । ' तनयं तनोतेः ' । पौत्रम् । तद्ध्यतितरां पितुः सकाशात्ततं भवति । सत्यप्यपत्य-

तनयश्च

नामत्वाविशेषे इहाजामितायै विशेषः । एवमन्यत्रापि समानार्थानामेकवाक्ये विशेष उपेक्ष्य इति दर्शयति ।

---

१ ठ. ड. दिद्युदिति. २ ग. °सृष्टेति[6] । हे°. ३ ग. च. ज. हिंसि. ४ क. ख. घ. झ. ट. ठ. ड. ' वा ' नास्ति. ५ क. ख. घ. ञ. ट. ठ. ड. °मन्नं वातो वर्षमिष°. ६ क. ख. घ. झ. ट. ठ. ड. हिंसां नो मा°.

‘ अग्निरपि रुद्र उच्यते ’ इति । विचारानुस्मृतये संक्षेपप्रदर्शनम् । तस्यैषा[1] भवति ’ अग्नेः रुद्रस्य ॥ ७ ॥

जरांबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ( ऋ० सं० १ । २७ । १० ) ॥ जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा तद्विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयमिन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेन्दवे द्रवतीति[2] वेन्दौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धत[3] तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदं करणादित्याग्रायण इदं दर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इञ्छत्रूणां दारयिता वा द्रावयिता वादरयिता च यज्वनां तस्यैषा भवति ॥ ८ ॥

जराबोधेति[4] । शुनःशेपस्यार्षम् । अश्वं न त्वा वारवन्तम् ( ऋ० सं० १ । २७ ) इत्येतस्मिन् सूक्ते । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १३ ) । येयं मया तव जरा स्तुतिः उच्यते भगवन्नग्ने रुद्र तां त्वं बोध बुध्यस्व । अथवा । हे[5] जराबोधयितः । स हि जरया स्तुत्या होतृत्वे वर्तमानोऽभिमतमर्थं यजमानानां संपादयन् देवान् बोधयति । तद्विविड्ढि तत्कुरु विशेविशे मनुष्याय यज्ञियाय यज्ञसंपादिने जनाय यत्त्वया यज्ञे कर्तव्यम् । ततस्तुभ्यं रुद्राय देवानां स्तोत्रे स मनुष्यः दृशीकं दर्शनीयं श्रवणीयं श्रवणार्हं व्यपगतदोषं स्तोत्रमुच्चारयिष्यति ।

रुद्राभिधानोऽग्निः

१ ठ. ह. °द्रस्य । इति निरुक्तभाष्ये चतुर्थाध्याये ( ह. ‘चतुर्थाध्याये’ नास्ति ) ७ खण्डः; थ. झ. ठ. ज. अङ्को नास्ति. २ छ. त. ट. °वत इति’. ३ क. ख. ङ. थ. ध. ठ. ह. °मैन्धंस्तदि°. ४ ग. °धेति । शु°. ५ च ‘हे’ नास्ति.

इन्द्रः कस्मात् ।

'इन्द्रः' (४) कस्मात् । 'इरां दृणातीति वा' । इराम् अन्नं व्रीह्यादि दृणाति विदारयति । इराशब्दात्पूर्वपदं दृणातेरुत्तरपदम् । वर्षक्लेदितमङ्कुरं बीजम् भिनत्ति । [1]तदिन्द्रकारितम् । सोऽयम् इरादारिः सन्निन्द्रः इति परोक्षेणोच्यते यथा 'अग्रणीः सन्नग्निः' (निरु० ७।१४) इति । विज्ञायते हि । 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' (शत० ब्रा० १४।५।१।२) इति । सर्वत्रैवं देवताभिधेयेषु । अभिधानत एव हि देवतात्मनस्तत्त्वम[3]न्तर्णीय व्यवधायात्मानमविदुषां परोक्षीकृत्य नित्यं वर्तते । तां तु विद्वांसस्तदभिधानव्युत्पत्तिद्वारेण विवृत्य दैवेन चक्षुषा मनसोपजातदिव्यदृष्टयो दृष्ट्वा ताद्भाव्यं प्रतिपद्यन्त इति तदभिधानव्युत्पत्तौ कृत्स्नः पुरुषार्थ आहितः ।

इन्द्रशब्दव्युत्पत्तौ योऽयमतितरां प्रयत्नस्तस्य प्रयोजनम्

इन्द्रश्च भूयिष्ठभाक्प्राणदेवतानामुभयोरध्यात्माधिदैवतयोरिति तदभिधानमाचार्योऽतितरां निरवोचत् । 'इरां ददातीति वा' । तदेव पूर्वपदं ददातेरुत्तरपदम् । यो वर्षद्वारेणासाविरामन्नं ददाति सोऽयम् इरादः इरादाता इन्द्रः । 'इरां दधातीति वा' । तदेव पूर्वपदं दधातेर्दानार्थस्य धारणार्थस्य वोत्तरपदम् । सोऽयम् इराधः इराधारयिता इन्द्रः । 'इरां दारयतीति वा' । तदेव पूर्वपदं दारयतेरुत्तरपदम् । सोऽयम् इरादारयिता इन्द्रः । 'इन्दवे द्रवतीति वा' । इन्दुशब्दात्पूर्वपदं द्रवतेरुत्तरपदम् । इन्दुः सोमः । तं पातुमसौ द्रवति । [4]द्रवतिर्गत्यर्थः । सोमपानार्थमसौ द्रवति । सोऽयम् इन्दुद्रवः इन्द्रः । 'इन्दौ रमत इति वा' । क्रीडत्ययं सोम इतीन्द्रः । 'इन्धे भूतानीति वा' । 'ञिइन्धी दीप्तौ' (धा० ७।११) इत्यस्य । भूतानि ह्यनावन्नोत्पत्त्याधिदैवस्थोऽध्यात्मस्थो वाभ्यवहारयन् विभजमानश्च दीपयति द्युतिमन्ति करोति । सोऽयम् इन्धः इन्द्रः । 'तत्' इदमपराभि-

१ क. ख. घ. ट. ड. 'तमिन्द्र'; च. तामिदिन्द्र°; ठ. तमिन्द्र° दि. २ सर्वेषु पुस्तकेषु °धानेष्वभिधानत°. ३ ग. च. ज. 'मतूर्णी'; ठ. ड. °मन्तणीय. ४ ग. च. ज. °वतिगत्य°. ५ क. ख. घ. झ. ट. ट. ड. °वर्तीति सो°. ६ ग. ज. क्षुद्रत्य°; च.—थ्यं. ७ ग. च. ज. इन्धी. ८ ग. च. ज. 'वा' नास्ति.

न्द्रस्येन्द्रत्वं ब्राह्मण उच्यते । 'यदेनं' मध्यतोऽवस्थितं शरीरस्य प्राणभावेन विष्टभ्येतरान् प्राणान् वागादीनितरप्राणवृत्तिमोहाभाग्यसंप्रदानेन 'यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि' ( छान्दो० उप० ५।१।१३ ) इत्येवमादिना प्राणाधिदेवताः 'समैन्धत' समदीपयन् संतानार्थं 'तदिन्द्रस्येन्द्रत्वमिति विज्ञायते' । इन्धे भूतानीति कर्तरि प्राणैरेन समैन्धतेति कर्मणि । 'इदं करणादित्याग्रायणः'। इदंशब्दात्पूर्वपदं करोतेरुत्तरपदम् । इदमसौ सर्वमकरोदिति । सोऽयम् इदंकरः सन्निन्द्रः । 'इदं दर्शनादित्यौपमन्यवः' । इदं पूर्वपदं दृशिरुत्तरपदम् । इदमसावद्राक्षीत्सर्वमिति । सोऽयम् इदंदर्शी इन्द्रः । 'इन्दतेर्वैश्वर्यकर्मणः' । इन्दः पूर्वपदं द्रवतेर्द्रावयतेर्वोत्तरपदम् । किमसौ द्रवति दारयति वेति । 'शत्रूणां दारयिता द्रावयिता वा' । किमुक्तं भवति । ईश्वरश्चासौ द्रावयिता च शत्रूणाम् । अथवा । ईश्वरश्चासौ दारयिता च शत्रूणामितीन्द्रः । अथवा । ईश्वरश्चासौ आदरयिता च यज्वनाम् । आदरकर्ता यज्वनामुपरि । 'तस्यैषा भवति' ॥ ८ ॥

---

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ( ऋ० सं० ५ । ३२ । १ )॥ अदृणा उत्समुत्स उत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान्माध्यमिकान्संस्त्यायान्बाबध्यमानानरम्णा रम्णातिः संयमनकर्मा विसर्जनकर्मा वा महान्तमिन्द्र पर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धारा अवहन्नेनं दानवं दानकर्माणं तस्यैषापरा भवति॥९॥

१ ग. च. ज. महा°. २ क. ख. घ. झ. ट. ठ. ड. °दह. विशिष्ठो°; च. यदिहं च वसिष्ठो°. ३ क. ख. घ. झ. ट. ठ. ड तद्विशिष्ठो°. ४ क. ख. घ. झ. ट. ठ. ड. °मैन्धन् स°. ५ ट. °न्धान्निति. ६ च. इंद्रः; ट. इन्दतेः. ७ घ. झ. ट. द्रवतेर्वोत्त°. ८ ग. च. ज. चेति. ९ च. 'ईश्वरश्च० शत्रूणाम् । अथवा 'नास्ति. १० ग. च. ज. °श्चासावादर°. ११ ठ. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये अष्टमः खण्डः; ड. °वति । इति निरुक्तभाष्ये ८ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. १२ क. ख. ङ. थ. ध. ठ. ड. उत्सरणाद्वोत्सदना°. १३ छ. त. द. °द्वोन्नयनाद्वा व्यसृ°. १४ छ. त. द. माध्यमका°. १५ छ. त. द. अबाह°.

अदर्दरुत्समिति[1] । गातोरात्रेयस्यार्षम् । उत्सो मेघः । स कस्मात् । ' उत्सदनात् ' । उत्पूर्वस्य सदेः । ऊर्ध्वमसौ सन्न इत्युत्सः । उत्पूर्वस्य वा स्यन्दतेः । उपर्यसाववस्थितः स्यन्दतीत्युत्सः । ' उनत्तेर्वा ' । ' उन्दी क्लेदने ' ( धा ७ । २० ) इत्यस्य । क्लेदयत्यसौ । तम् उत्सं मेघं हे भगवन्निन्द्र त्वम् अदर्दः । दारितवानसि त्वम् । दारयित्वा च जर्जरीकृत्य तस्योत्सस्य असृजः वि खानि । बिलानि[3] विवृतानि त्वमकरोरुदकनिर्गमनद्वाराणि । स त्वममुना प्रकारेण अर्णवान् अर्णस्वतः अर्णसा उदकेन तद्वतः एतान् माध्यमिकान्[4] संस्त्यायान् मेघसंघातान् उदकभारेणातिगुरुणा बाध्यमानान् यथाकालम् अरम्णाः विसृष्टवानसि । रम्णातिः धातुः ' संयमनकर्मा ' अन्यत्र । तद्यथा । ' सविता यन्त्रैः पृथिवीमरम्णात् ' ( ऋ० सं० १० । १४९ । १ ) इत्यत्र । इह पुनर्मेघविदारणसंबन्धात् ' विसर्जनकर्मा ' । किंच । महान्तम् इन्द्र योऽप्यतिमहान् पर्वतो मेघः केनचिदप्यन्येनाशक्यो विवृतद्वारः कर्तुं तमपि वि यद्वः यत् व्यवृणोः विवृतमपावृतोदकनिर्गमनद्वारमकरोः । विवृत्य च सृजो वि धाराः । व्यसृजो धाराः त्वमुदकधाराः पुनः पुनः अवहन् अवघ्नन् दानवम् उदकदातारं मेघम् । य एतदकार्षीस्त्वं स इदं नामास्माकं कुरुष्वेति ।

इन्द्रः

' तस्यैषापरा भवति ' । सा पुनः किमर्थम् । उक्तं हि । ' अथास्य कर्म रसानुप्रदानं वृत्रवधो या च काचिद्बलकृतिः ' ( निरु० ७ । १० ) इति । तदेतदिह रसानुप्रदानं वृत्रवधश्च दर्शितः[6] । बलकृत्युपप्रदर्शनार्थमपरोदाह्रियते[7] ॥ ९ ॥

**यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स**

१ ग. °मिति । गा°. २ क. ख. घ. झ. ट. ठ. ड. °नाद्वा. ३ ग. बालानि° ब; च. बलानि; ज. बालानि. ४ ग. ज. माध्यमका°. ५ ग. च. ज. °त्यवसृजो°. ६ क. ख. घ. झ. ट. दर्शितम्. ७ ठ. ड. °यते । इति निरुक्तभाष्ये चतुर्थाध्याये ( ड. ४ ध्याये ) नवमः खण्डः ( ठ. ९ खण्डः ); घ. झ. ट. ज. अङ्को नास्ति.

जनास इन्द्रः ( ऋ० सं० २ । १२ । १ ॥ ) यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानां तस्यैषा भवति ॥ १० ॥

यो जात एव[1] प्रथमो[2] मनस्वानिति[3] । गृत्समदस्यार्षम् । इन्द्राय मनस्वते पुरोडाशस्य[4] याज्या ( मै० सं० १० । २ । १२ ) गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किल[5] मरुद्गणैर्विनाकृतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे । स किल भीतो[6]ऽनेन सूक्तेनेन्द्रं[7] तुष्टाव । आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयांचकार ।

यो जात एव जातमात्र एव प्रथमो मुख्यः सर्वभूतानां प्रति[8] मुख्यतां स एव संपेदे । मनस्वी[9] मेधावी । अन्ये हि कालेन मुख्याः संपद्यन्ते मेधाविनश्च । देवो देवान् क्रतुना पर्यभूषत् । सत्यपि देवत्वा[10]विशेषे इतरान् देवान् क्रतुना कर्मणा पर्यभूषत् पर्यगृह्णात् परिगृहीतवान् स्वामित्वेन । पर्यरक्षद्वा मुख्यत्वात् । अत्यक्रामद्वा प्रभावेन । यस्य[11] शुष्मात् बलात्[12] रोदसी अभ्यसेताम् अबिभीतां नृम्णस्य मह्ना बलस्य सेनालक्षणस्य[13] महत्त्वेन । अतिमहदसह्यमस्य[14] बलमवश्यमयमावां सादयिष्यतीत्येवमतिमहत्यायेते द्यावापृथिव्यावबिभीतां यस्य

१ छ. त. द. जात एव°. २ ठ. ड. एवेति. ३ ग. °निति । गृ°. ४ क. ख. घ. झ. ट. ठ. ड. °डाशस्तस्य. ५ ग. च. ज. किमलं. ६ ग. च. ज. बिभीतो°. ७ ग. च. ज. °नेन्द्रं च तु°. ८ च. प्रथमु° ति. ९ क. ख. घ. झ. ट. ठ. ड. मनस्वी च मे°. १० घ. दैव°. ११ क. ख. घ. झ. ट. यस्य च शु°. १२ क. ख. घ. झ. ट. ठ. ड. शारीराद्बलात्. १३ ग. च. ज. 'सेनालक्षणस्य' नास्ति. १४ ग. ज. °मस्यावश्यमरजयमावां°; च. °मस्या— — मयमावां°.

शुष्मात् हे असुरजनाः स इन्द्रो नाहमिन्द्रो ब्राह्मणोऽहं तत्प्रसादादेवाबास-तद्रूप इति । 'ऋषेर्दृष्टार्थस्य' अनुभूतेन्द्रमैत्रस्येन्द्रवयस्यस्य गृत्समदस्येन्द्रं प्रति 'प्रीतिः' तुष्टिः 'भवत्याख्यानसंबद्धा' । अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषय इति । अथवा । 'दृष्टार्थस्य' इति देवतार्थं सतत्त्वतो दृष्टवतो भावितान्तःकरणस्य तत्रोपजातप्रीतेः अतिहर्षात् 'आख्यानयुक्ता' अन्येभ्यः । कथनसंयुक्तेत्यर्थः ।

पर्जन्यः कस्मात्

'पर्जन्यः' (५) तृपेराद्यन्तविपरीतस्य' । 'तृप तृप्तौ' (धा० पा० ६ । २७) इत्यस्य धातोः । स कथं भवति । आद्यन्तविपर्ययेण । यतस्तमाद्यन्तविपर्ययं स्वयमेव दर्शयति । 'तर्पयिता' स एव भवति । किमेकदेशिकः । नेत्युच्यते । 'जन्यः' सर्वजनपदतर्पयिता । अथवैवमन्यथा स्यात् । 'परो जेता वा' । परः प्रकृष्टो जेता पर्जन्यः । परशब्दात्पूर्वपदं जयतेरुत्तरपदम् । 'परो जनयिता वा' । प्रकृष्टो जनयिता । तदेव पूर्वपदं जनयतेरुत्तरपदम् । 'प्रार्जयिता वा' । कस्य । 'रसानाम्' । प्रपूर्वस्यार्जयतेः पर्जन्यः । स हि रसान् प्रकटीकरोति । 'तस्यैषा भवति' ॥ १० ॥

---

**वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् । उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः ( ऋ० सं० ५ । ८३ । २ ) ॥ विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधान्महान् ह्यस्य वधोऽप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतो बृहस्पतिर्बृहतः पाता वा पालयिता वा तस्यैषा भवति ॥ ११ ॥**

१ क. ख. घ. झ. ट. ठ. ड. °बन्धात्; ग. च. ज. °बंधा. २ ग. च. ज. भवि°. ३ ग. च. ज. कार°. ४ क. ख. घ. झ. ट. ठ. ठ. °ख्यानसंयु°. ५ ठ. ड. °वति । इति निरुक्तोत्तरषट्कटीकायां (क. नैरु०) चतुर्थाध्याये दशमः खण्डः; घ. झ. ट. न. अङ्को नास्ति.

पर्जन्यः

वि वृक्षान्हन्तीति[1] । अत्रेरार्षम् । कारीर्यां दिगुस्थाने विनियोगः ( आश्व० श्रौ० २ । १३ ) । वि वृक्षान् हन्ति विहन्ति वृक्षान् पर्जन्यः अशनिपातैः[2] । कदा । यदा तस्करादीननाकालप्रभवान् पापकृतो वर्षेणौषधीरभिनिष्पादयन् स्तनयन् हन्ति उपशमयति सुभिक्षं कुर्वंस्तदा । विहन्ति च रक्षांसि । विविधं हन्ति क्रूरकर्मणः । विश्वं बिभाय सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् पर्जन्यात् । कथम् । उतानागा ईषते । एवं नाम महावधादस्मात्सर्वाणि भूतानि बिभ्यति येनानागा अपि अनपराधोऽपि सन् सर्व एव अस्माद्वर्षकर्मवतः स्तनयित्नुशब्दैरशनिं[3] मुञ्चत ईषते पलायते मामयं हन्तीति मन्यमानः । योऽयमेवमतिमहानुभावो भगवान् पर्जन्यः स वर्धत्वस्माकमिति ।

' बृहस्पतिः ' ( ६ ) कस्मात् । ' बृहतः पाता वा पालयिता वा ' ।

बृहस्पतिः कस्मात्

बृहतो महतोऽस्य जगत उदकस्य वा पाता रक्षिता । पालयितापि रक्षितैव । धात्वन्यत्वमर्थैकत्वम् । ' तस्य एषा भवति '[4] ॥ ११ ॥

**अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेण विकृत्य ( ऋ० सं० १० । ६८ । ८ ) ॥ अशनवता मेघेनापिनद्धं मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षाच्चमसः कस्माच्चमन्त्यस्मिन्निति बृहस्पतिर्विरवेण शब्देन विकृत्य ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा तस्यैषा भवति ॥ १२ ॥**

बृहस्पतिः

अश्नापिनद्धमिति[5] । अयास्यस्याङ्गिरसस्यार्षम् । अशनवता व्यापनवता मेघेनापिनद्धम् आत्मनो मध्यमतिनीय नद्धं[6] बद्धं विवृतं[7] व्यवहितमदृश्यमन्यैः बृहस्पतिः मधु उदकं पर्यपश्यत् सर्वतोऽपश्यत् । कथम् । मत्स्यं न दीन उदनि क्षियन्तम् ।

१ ग. °न्तीति । अ°. २ ग. च. ज. घ. झ. ट. ठ. ड. °र्षेणौष°. ३ ग. च. ज. घ. झ. ट. ठ. °शनिमु°; ड. °शनिमु°. ४ ठ. ड. °वति । इति निरुक्तोत्तरषट्कभाष्ये ( ड. निरुक्तटीकायामुत्तरषट्के ) चतुर्थेऽध्याये एकादशः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ५ ग. °मिति । अ°. ६ च. निबद्धं. ७ क. ख. ग. ज. घ. झ ठ. ड. विवृतं, ट. विवृते घ.

मत्स्यमिव दीने उदके उपक्षीयमाणे उदके क्षीणप्राये क्षियन्तं निवसन्तम् । यथा मत्स्यबन्धोऽल्पे उदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्यो ग्रहीतुमयमित्येवं पर्यपश्यत् । निष्टजभार चमसं न वृक्षात् । तच्च मधु दृष्ट्वा निर्जभार निर्हृतवान् । कथम् । चमसं न वृक्षात् । यथा कश्चित्कुशलः शिल्पी वृक्षमध्यात् चमसं यज्ञपात्रं निर्हरेन्निष्पादयेदेवं निर्जहार बृहस्पतिः । अत एवोदकनिर्हरणान्मध्यमः । कथमसौ निर्जहार । विरवेणा विकृत्य भीषणेन अतिमहता रवेण शब्देन संक्षोभ्य मेघं स्रस्तसर्वाङ्गसंधिबन्धनं कृत्वा विकृतं तत एव विह्वलीभूतं विकृत्य समन्ततो विशकलीकृत्य एवं निर्जहार मधु यो बृहस्पतिः सोऽस्माकमपीदं करोत्विति ।

'चमसः' चमेर्भक्षणार्थस्य । तत्र हि सोमश्चम्यते ।

'ब्रह्मणस्पतिः' (७) कस्मात् । 'ब्रह्मणः पाता वा पालयिता वा' ।

ब्रह्मणस्पतिः कस्मात्

ब्रह्म अन्नमुदकादि वा । तस्योभयस्याप्यसौ वर्षेणौषधीरभिनिष्पादयन्पाता संपद्यते । वर्षाभावे ह्येतदुभयमुत्सीदति । 'तस्यैषा भवति' ॥ १२ ॥

---

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् । तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ( ऋ० सं० २ । २४ । ४ ) ॥ अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभि यमोजसा बलेनाभ्यतृणत्तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशो बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् ॥ १३ ॥

---

इति दशमाध्यायस्य प्रथमः पादः ॥

अश्मास्यमवतमिति । गृत्समदस्यार्षम् । अश्मशब्दात् 'अशनवन्तम्'

ब्रह्मणस्पतिः

इति आस्यशब्दात् 'आस्यन्दनवन्तम्' इति भाष्यकारश्चकार तथा सामर्थ्यमपेक्ष्य । किमुक्तं भवति । उदकव्यापनक्रियया तद्वन्तम् आस्यन्दनक्रियया चोदकप्रक्षरण-

---

१ क. ख. घ. झ. ट. ठ. ड. °माणप्राये क्षि°. २ क. ख. घ. झ. ट. ठ. ड. °मसः कस्मात् । चमे°. ३ ठ. °वति । इति निरुक्तटीकायां मतरषट्के चतुर्थेऽध्याये द्वादशः खण्डः; ड. °वति । इति १२ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ छ. प्रथमः पादः; त. इति दशमस्य प्रथमः; ड. इति नैरुक्त उत्तरार्धस्य दशमा°. ५ ग. °मिति । गृ°

क्रियया तद्वन्तम् । अश्मास्यमवतं मेघं मधुधारम् उदकं[1] धारयितारं यम् आजसा बलेन अभ्यतृणत् अभ्यहन्[2] ब्रह्मणस्पतिः तम् अवतम् अवाञ्चितम्[3] अवाग्गतं भूमिमुदकभावेन गतं पुनरादानकालमुदकस्य प्राप्य तमेव विश्वे पपिरे पिबन्ति । तदुदकमाददते । के पुनस्ते । **स्वर्दृशः सूर्यस्य रश्मयः। स्वरिव ये दृश्यन्ते। ते सूर्यसमानदर्शनाः । स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते। ते पिबन्ति । पुनश्च प्राप्य तदुत्सर्गकालं बहु साकं[4] बहु तदुदकं सहभूता मण्डलात् अर्वाञ्च[5] आवृत्य एनम् अन्तरिक्षे उत्सं मेघम् उद्रिणम् उदकवन्तं कुर्वन्तः सिञ्चन्ति तं च पुनरेवं मेघं यो ब्रह्मणस्पतिर्लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि सोऽस्माकमिदं नाम करोत्विति ॥ १३ ॥**

पञ्चदशाध्यायस्य प्रथमः पादः ॥[6]

द्वितीयः पादः ॥

**क्षेत्रस्य पतिः क्षेत्रं क्षियतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा[7] भवति ॥ १४ ॥**

क्षेत्रं कस्मात्

'क्षेत्रस्य पतिः ' ( ८ ) कस्मात् । ' क्षेत्रं ' तावत् ' क्षियतेर्निवासकर्मणः ' । तदपाश्रयेण हि ग्रामे क्षियन्ति[8] कुटुम्बिनः । ' तस्य पाता वा पालयिता वा ' मध्यमः । तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वसाफल्यम् । यदा हि मध्यमेन दृष्टं भवत्यथ क्षेत्रं सफलं भवति । विगृहीतमेव समाम्नातम् । निगमे तथा दृष्टत्वात् । ' तस्यैषा भवति ' ॥ १४ ॥[9]

पतिः कस्मात्

१ ठ. ड. उदकधार°. २ क. ख. घ. झ. ट. ठ. ड अभ्यहनत्. ३ क. ख. घ. झ. ट. ठ. ड. °वाङ्गति°. ४ क. ख. घ. झ. ट. ठ. ड. साकं सह°. ५ ग. च. ज. °अर्वाञ्च°. ६ ठ. इति निरु० टी० १३ खण्डः; ड. इति निरुक्तटीकायामुत्तरषट्के चतुर्थेऽध्याये त्रयोदशः खण्डः । इति निघण्टपञ्चमाध्यायेन सह नैरुक्तपञ्चदशाध्याये प्रथ० . ७ क. ख. १ ( १४ ); त. द. १. ८ क ख. घ. झ. ट. ठ. ड. °यन्ति निवसन्ति कु°. ९ क. ख. ( १४ ), ठ. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थेऽध्याये १३ खण्डः; ड. °शः । इति निरुक्तभाष्ये १४ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृळातीदृशे ( ऋ० सं० ४ । ५७ । १ ) ॥ क्षेत्रस्य पतिना वयं सुहितेनेव जयामो गामश्वं पुष्टं पोषयितृ चाहरेति । स नो मृळातीदृशे । बलेन वा धनेन वा मृळेतिर्दानकर्मा तस्यैषापरा भवति ॥ १५[3] ॥

क्षेत्रस्य पतिना वयमिति । वामदेवस्यार्षम् । क्षेत्रस्य पतये चरोः पुरोनुवाक्या ( मैत्रा० सं० २ । १ । १ )।

क्षेत्रस्य पतिः

क्षेत्रस्य पतिना सुष्ठु हितेन केनचिदाप्तेन मित्रेण संयुक्ताः सन्तो वयं जयेम[6] गवाश्वादीनि धनानि पुष्टानि बलवन्ति पोषयितॄणि पोषणाय समर्थानि । उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना तत्प्रसादादेव तानि भोक्तुं शक्तिरस्तु । कथमिति । 'आ' इत्यस्योपसर्गस्य संबन्धि क्रियापदमध्याजहार भाष्यकारः । आहरेति । कोऽर्थः । उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदमाहरतेति सर्वद्रव्याणि यथाश्नुवीमहि तथा क्षेत्रस्य पतिरस्मान् मृडेतु । 'मृळेतिर्दानकर्मा' । ईदृशे धनलाभाय भोगाय चास्मान् ददातु धारयतु । नित्यं स्थिरान् करोत्वित्येतदाशास्महे ।

'तस्यैषापरा भवति' । सा पुनः किमर्थम् । यस्य चरोः एषा पुरोनुवाक्या तत्र ब्राह्मणं भवति । 'इयं वै क्षेत्रं पृथिव्यस्यामदीनायां प्रतितिष्ठति' इति । यतः परया वर्षलिङ्ग्योपपादयति मध्यस्थानः क्षेत्रस्य पतिरिति । भक्तिमात्रं ब्राह्मणमिति[12] ॥ १५ ॥

१ छ. त द. मृळाती°. २ छ. त. द. मृळातिरुपदयाकर्मा पूजाकर्मा वा तस्यै°. ३ क. ख. २ (१५); त. द. २. ४ ग. °मिति°। वा°. ५ क. ख. घ. झ. ट. ठ. ड. °नेणेव सं°. ६ क. ख. ग. ज. घ. झ. ट. ठ. ड. जयामः. ७ क. ख. ग. ज. घ. झ. ट. ठ. ड. त्वत्प्र°. ८ ग. च. ज. यथा स्तुवी°. ९ क. ख. ध. झ. ट. ठ. ड. मृडयतु°. १० क. ख. घ. झ. मृळति°; ग. च. ज. ठ. ड. मृहति°. ११ घ. झ. ट. ठ. ठ. ड. °दीनानां. १२ क. ख. १२ (१५); ठ. ड. °मिति । इति भाष्ये १५ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु[1] ( ऋ० सं० ४ । ५७ । २ )॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृळयन्तु[2] मृळयतिरुपदयाकर्मा[3] पूजाकर्मा वा तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकं मधुमन्तं मधुश्चुतमिति यथा यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरं हिरण्यरूपः स हिरण्यसंदृगिति यथा यथाकथाच विशेषोऽजामि भवतीत्यपरं मण्डूका इवोदकान्मण्डूका उदकादिवेति यथा । वास्तोष्पतिर्वास्तुर्वसतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा[4] भवति ॥ १६ ॥

क्षेत्रस्य पते मधुमन्तमिति[5] । आर्षं यदेव पूर्वस्याः । विनियोगो महाव्रते । अदित्यै चतुरूपश्चतुःस्तनग्रहः । तस्य तृतीयमनयर्चा[6] गृह्यते । हे क्षेत्रस्य पते मधुमन्तमूर्मिं मधुरस्वादम्[7] उदकसंघातं[8] धेनुर्यथा पयो

क्षेत्रस्य पतिः

दोग्धि एवमस्मासु धुक्ष्व प्रक्षर । किंच । मधुश्चुतं[9] घृतमिव सुपूतम् । मध्विव[10] यन्मुहुर्मुहुः श्चोतति[11] । घृतमिव सुपूतम् उदकमकलुषम् । तस्य दानेन ऋतस्य नः पतयो मृळयन्तु[12] । ऋतस्य उदकस्य पतयः पातारो माध्यमिका देवाः क्षेत्रस्यपतिप्रमुखाः मृळयन्तु[12] । नित्यमस्मान् रक्षन्तु पूजयन्तु वा ।

अत एव मन्त्रात्प्रसक्तमतः परं सर्वमन्त्रेषु जाम्यजामिता पदानां

जाम्यजामिता-विचारः

चिन्त्यते । जामीति पुनरुक्तसंज्ञा । सा पुनरियं निगमत एव । विज्ञायते हि । ‘ जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरु-

१ क. ख. छ. त. द. मृळय°. २ क. ख. छ. त. द. मृळय°. ३ क. ख. मृळय°; छ. त. द. मृळति°. ४ क. ख. ३ (१६); त. द. ३. ५ ग. °मिति । आ°. ६ ग. च. ज. ठ. ड. °तीयर्चा गृ°. ७ घ. झ. ट. ठ. ड. स्वादुम्°. ८ ग. च. °दकं सं°. ९ च. मधुश्च्युतं. १० ग. च. ज. मध्वेव. ११ कै. ख. घ. झ. ट. ठ. ड. °श्चोत. १२ ग. घ. ज. झ. मृळय°.

त्वतीयं शस्यते ' ( मैत्रा० सं० ४ । ६ । ८ ) इति । तदेतत्पुनरुक्तं

*द्विविधं जामि*

द्विविधम् । समानशब्दार्थमसमानशब्दार्थं च । तत्र समानशब्दार्थं नाम यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते । तद्यथा ।

*समानशब्दार्थं जामि*

' मन्म रेजंति रक्षोहा मन्म रेजंति ' ( ऋ० सं० १ । १२९ । ६ ) । तदविकृत्यान्यथाप्रतिसमाधानाशक्तौ वक्ष्यति ' अभ्यासे भूयांसमर्थं मन्यन्ते ' ( निरु० १० । ४२ ) इति । यत्पुनरसमानार्थं पदमभ्यस्यते तदपुनरुक्तमेव । यदसमानशब्दं समानार्थं च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्धन्ति ' तद्यत्समान्यामृचि ' इति । ' तत् इति ' वाक्योपादाने । ' यत्समान्यामृचि ' । एकस्यामृचि । ' समानाभिव्याहारं ' पदं ' भवति ' । समानमर्थमभिव्याहरति । पदान्तरेण यः कश्चित्पूर्वेऽर्धर्चेऽभिहितोऽर्थस्तमेवोत्तरेऽर्धर्चेऽभिदधज्जामि भवति । तद्यथा ' मधुमन्तं मधुश्चुतमिति ' । यो हि मधुश्च्युत् अवश्यमसौ मधुमान् । ' एकं ' तावदाचार्यमतम् ।

*असमानशब्दं समानार्थं च*

*एकस्यामपि ऋचि वर्तमाना पुनरुक्तिर्जामिदोषार्हेत्येकं मतम्*

' यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम् ' ।

नानार्धर्चगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात्प्रकृतार्थानुस्मृतये पुनरनुकीर्तनमजाम्येव । किंतु यदेव समाने पादे एकस्मिन् पादान्तरेण व्यवहितं पदं समानार्थं पुनरुच्यते अविच्छिन्नप्रसक्तानुस्मृति तदेव जामीत्यपरम् । ' हिरण्यरूपः स हिरण्यसंदृक् ( ऋ० सं० २ । ३५ । १० ) इति यथा ' । यो हिरण्यरूपः सोऽवश्यं हिरण्यसंदृक् ।

*समानपादे एव वर्तमाना दोषार्हेत्यपरम्*

तत्किं पौनरुक्त्ये न तद्योज्यं पदं तत्संयोगाद्वा तदसाधु मन्त्रवाक्यम् । नेत्युच्यते ' यथाकथाच विशेषोऽजामि भवतीत्यपरम् ' । यथाकथंचित् यः कश्चित् स्वल्पोऽपि हि तत्र विशेषो वक्तव्यः । दृष्टानुविधानाच्छन्दसोऽर्थानुविधाने यतेत । एवं येन केनचित्स्वल्पेनापि विशेषेण तदजामि भवतीत्यपरम् । अपरे पुनः कृतवाक्यार्थपरिस-

*स्वल्पेऽपि विशेषे अजामि भवतीति मतं यास्कसंमतम्*

१ ग. च. ज. मधुश्च्युत॰. २ क. ख. घ. झ. ट. ठ. ड. मधुश्चुत्॰. ३ च. पादा॰; ज. पैदा॰ पादान्तरेण व्यवहितमिति वा. ४ क. ख. ध. झ. ट. यतेतैवम् । येन॰; ग. ज. यतेतेवं॰; च. यतेतवं येन॰; ठ. यतेतेन येन॰; ड. यतेत येन॰.

माध्यतिरिक्तं पदं पुनरभ्यस्यमानं निपातवत्पादपूरणत्वेनार्थवदिति प्रतिसमादधते । तदेतदवगतं भवति । इदमेव त्वभीष्टमाचार्यस्य 'यथाकथाच विशेषः' इति । तदर्थमुदाहरति । 'मण्डूका इवोदकान्मण्डूका उदकादिव (ऋ० सं० १० । १६६ । ५) इति यथा' । एवमादिषु यथा[1] समानशब्देष्वसमानशब्देषु च पुनरुक्तेषु यः कश्चिद्विशेषो वक्तव्यः । स कथमिति । मन्त्रमेव तं व्याचक्ष्महे यत्रैव पादः । 'योगक्षेमं व आदायाहं[2] भूयासमुत्तम आ वो मूर्धानमक्रमीम् । अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव' (ऋ० सं० १० । १६६ । ५) इति ॥

पुनरुक्तौ कश्चिद्विशेषो वर्तते एव

ऋषभस्यार्षम् । कामतो देवता कल्प्या[3] । विद्विष उच्यन्ते[4] । योगक्षेमं व आदायें । योगो नाम लिप्सितस्यार्थस्य[5] प्राप्तिः । क्षेमो नाम तत्परिपालनम् । हे विद्विषः एतदुभयं भवद्भ्यः आदाय मदधीनसर्वयोगक्षेमान् युष्मान् कृत्वा सर्वार्थेषु अहं भूयासमुत्तमः उत्कृष्टो युष्माकम् । आ वो मूर्धानमक्रमीम् । उपरि युष्मानधितिष्ठेयम् । ते यूयमाक्रान्तमूर्धानो मया मम अधस्पदात् पादयोरधो वर्तमानाः मन्मुखप्रेक्षा[6] अस्वाधीनसर्वार्थवृत्तयो भूत्वा नित्यं मां वदत[7] । कथम् । मण्डूका इवोदकात् । यथा मण्डूका उदकादृते नित्यमस्वाधीनवाग्वृत्तयो[8] निर्वचनाः संपद्यन्ते एवं मदृते यूयं भूयास्त । मण्डूका उदकादिव । यथा चोदकादृते मण्डूकाः सर्वात्मनैव न भवन्त्येवं मदृते यूयं मा भूत । एवमत्रैकत्र विद्विषां निर्वाक्त्वे[9] मण्डूका उपमानम् । अन्यत्रोदकाभावे यथा[10] मण्डूका न भवन्त्येवं मदभावे यूयमित्युदकमुपमानम् । एव विशेषैः[11] । पूर्वयोरपि मन्त्रयोर्भवति कश्चिन्मधुमान्न तु मध्वविरतं मुहुर्मुहुश्चोततीति[12] । यथा[13] हिरण्यरूपः स हिरण्यसंदृगित्यत्रभवति कश्चिद्धिरण्यरूपो न तु हिरण्य-

यथा 'मण्डूका उदकादिव' इत्यत्र

पूर्वत्रापि तथा

१ सर्वेषु पुस्तकेषु 'यथा समान°'. २ क. ख. ग. घ. ज. व. झ. ट. आद्ययेति । ऋष; ठ. ड. °येति । ऋगभिचष्टे । 'योगक्षेमं व°'. ३ क. ख. ग. च. ज. घ. झ. ट. ठ. ड. कल्प्याः. ४ क. ख. सर्वा ऋवपठ्यते. ५ क. ख. घ. झ. ट. ठ. ड. °प्सितार्थ°. ६ ग. च. ज. सन्मु°. ७ ग. च ज. मा. ८ ग. ज. °यास्थ. ९ ग. च. ज. निर्वक्ते; घ. झ. ट. निर्वाक्त्वे; ठ. ड. निर्वके. १० क. ख. ध. झ. ट. ठ. ड. मण्डूका यथा. ११ क. ख. घ. झ. ट. विशेषः पूर्°. १२ क. ख. घ. झ. ट. ठ. ड. भवति । कश्चि°. १३ क. ख. घ. झ. ट. ठ. ड. यथा.

मिव दृश्यमानः प्रिय इति विशेषः ।

'वास्तोष्पतिः' ( ९ ) वक्तव्यः । स[1] पुनरेष रुद्रात्मना मध्यमो वास्तोष्पतिः ।

को वास्तोष्पतिः

विज्ञायते हि वास्तोष्पतीये यायावर्य[2]-प्रतिपत्तौ गृहगमनमधिकृत्य 'न हीनमन्वाहरेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयुः'( मैत्रा० सं० १ ५ । १३ ) इति । स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः । स पुनः 'अमीवहा' इति बलकृतिलिङ्गान्मध्यमः । तस्य पूर्वपदं विगृह्य निराह ।

वास्तुः कस्मात्

'वास्तुर्वसतेर्निवासकर्मणः' । 'वास्तु' इति गृहमुच्यते । उष्यते हि तस्मिन् । 'तस्य पाता' रक्षिता । तदधिदेवताभावेन रुद्रात्मना च[3] तत्कृतेनोपकारेण रक्षिता मध्यमः । इतरथा ह्युत्सीदेयुर्गृहाः । 'तस्यैषा[4] भवति'[5] ॥ १६ ॥

**अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ( ऋ० सं० ७ । ५५ । १ ) ॥ अभ्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन्त्सखा नः सुसुखो भव शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः शिवमित्यप्यस्य भवति यद्यद्रूपं कामयते तत्तद्देवता भवति । रूपं रूपं मघवा बोभवीतीत्यपि निगमो भवति[6] । वाचस्पतिर्वाचः पाता वा पालयिता वा तस्यैषा भवति ॥ १७ ॥**

अमीवहा वास्तोष्पत इति[7] । वसिष्ठस्यार्षम् । गृहकारिकास्थालीपाके

वास्तोष्पतिः

( मान० गृ० १ । ६ । १९ ) यायावर्यप्रतिपत्तौ च वास्तोष्पतीयहोमे ( मान० श्रौ० १ ६ । ३ ) विनियोगः । हे भगवन् वास्तोष्पते त्वमस्माकम् अमीवहा भव ।

१ क. ख. घ. झ. ट. ठ. ड. स च पु°. २ ठ. ड. उत्पद्यते ३ च. 'च' नास्ति. ४ ठ. ड. °शा स्तुतिर्भवति. ५ क. ख. ३ (।६); ठ. °वति । इति निरुक्तटीकायामुत्तरषट्के भाष्ये चतुर्थऽध्याये षोडशः खण्डः; ड. °वति । इति भाष्ये १६ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ६ क. ख. ४ (१ ); त. द. ४. ७ ग. इति । व°.

अमीवा[1] रोगस्तस्य हन्ता । कथम् । सर्वाणि रूपाणि आविशन् । यस्मा-स्मद्दुःखहेतोर्यः प्रतिपक्षः सर्पादेर्नकुलादिस्तस्य तस्य रूपमाविशन् तं तमस्माकममीवानं जहि । अमुना प्रकारेण घ्नन्नस्मदुपद्रवान् सखा मित्रं सुशेवः सुष्ठु सुखो भव । 'शेव इति सुखनाम' । तत्कस्मात् । 'शिष्यतेः । वकारो नामकरणः' । शि[2]षिर्धातुः वकारः प्रत्ययः शिष इत्यस्य । स पुनः 'अन्तस्थान्तरोपलिङ्गी' । अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः । न संज्ञा यथा[3] अन्तस्था यरलवाः । कश्च पुनरसौ । षकारः । तस्यान्तरमवकाशस्थानम् उपलिङ्गयति उपगच्छति यः स भवत्यन्तस्थान्तरो[4]पलिङ्गी । कश्च पुनरसौ । [5]वकारः । स षकारस्य स्थानमुपगच्छति । ततो गुणे कृते शेव इति भवति । स च पुनरेष धातुः 'विभाषितगुणः' इति 'शिवमित्यप्यस्य भवति' अगुणपक्षे ।

'सर्वाणि रूपाण्याविशन्' इत्यतः प्रसक्तमुच्यते । शक्नोति पुनर्वास्तोष्पतिः सर्वाणि रूपाण्यावेष्टुमित्युच्यते । 'यद्यद्रूपं कामयते तत्तद्देवता भवति' । अस्त्येतदैश्वर्यं देवतायाः । यद्यदिच्छति रूपं तत्तत्करोति । निगमोऽपि हि भवत्यैश्वर्यप्रख्यापकः । 'रूपं[6]रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परि स्वाम् । त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा' ( ऋ० सं० ३ । ५३ । ८ ) इति ॥ विश्वामित्रस्यार्षम् । यावन्ति कानिचिद्रूपाणि मघवा इन्द्रो भवितुमिच्छति तानि सर्वाण्यप्रतिबन्धेन बोभवीतीति[7] पुनः पुनर्भवतीति । कथम् । मायाः कृण्वानः । इदं भवामीदं भवामीत्येवं तन्वं परि स्वां स्वां तनुं तत्तदाकृत्यानेकविधां[8] विकुर्वाणः । त्रिर्यद्दिवः परि मुहूर्तमागात् । दिवः परि दिवः अधि द्युलोकात् मुहूर्तकालं प्रति यस्त्रिरागात् आगच्छति । स्वैर्मन्त्रैः हूयमानो वा स्तूयमानो वा युगपद्यजमानानां यज्ञेषु । अनृतुपाः अनियतसोमपानकालः सर्वदा यागोपपत्तेः । ऋतावा ऋतवान् यज्ञवान् । येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्तं त्रिरागच्छति तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूप-

ऐश्वर्याद्देवता इष्टं रूपं स्वीकरोति यथास्यामृचि इन्द्रः

१ ग. च. ज. °मीवरां°. २ क. ख. ठ. ड. शिषिधातु°. ३ ठ. ड. यणोऽन्तस्था°. ४ ग. च. ज. °न्तरोपलि°. ५ ग. च. ज. षक्रा°. ६ ग. रूपं°. ७ ग. च. ज. ध. झ. ट. °वीतीति । विश्वा°. ८ ग. च. ज. °तनुं तदा°.

मावेष्टुम् । एवं च सुष्ठु यदेतदुच्यते सर्वाणि रूपाण्याविशन्नमीक्ष्हा भवास्माकं त्वमिति ।

‘वाचस्पतिः’ ( १० ) वक्तव्यः । स पुनरेषः ‘वाचः पाता वा पालयिता वा’ प्राणात्मनेन्द्रः । ‘तस्यैषा भवति’[1] ॥ १७ ॥

वाचस्पतिः कस्मात्

पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते निरामय मय्येव तन्वं१ मम ॥ इति सा निगदव्याख्याता[2]पांनपाच्चतनूनप्त्रा[3] व्याख्यातस्तस्यैषा भवति ॥ १८ ॥

पुनरेहि वाचस्पत इति[4] । अपगतप्राणमिवात्मानं मन्यमानः पापकृत्यापसंबन्धात्कुतश्चित्कृतनिर्णेजनः सन् प्राणं ब्रवीति । हे प्राण पुनरेहि त्वं मां प्रति इति । किं पुनरेकाकी । नेत्युच्यते । देवेन मनसा सह । सर्वेन्द्रियवृत्तिदीपकेन मनसा सह । एत्य च हे वसोष्पते हे धनस्य अन्नस्य च पते निरामय नियमेन रमय । मय्येव एतां तन्वं मम । मा यासीर्भित्त इति प्राणात्पृथग्भूतमात्मानं पश्यन् स्तोता ब्रवीति ।

वाचस्पतिः

‘अपांनपात्[5] ( ११ ) तनूनप्त्रा व्याख्यातः’ शब्दनिर्वचनतः ( निरु० ८ । ५ ) । अग्निर्येयस्तु[6] मध्यमः । अद्भ्य आदित्यस्ततो मध्यमः । एवमपां पौत्रः । ‘तस्यैषा भवति’ ॥ १८[7] ॥

यो अनिध्मो दीदयदप्स्व१न्तर्यं[8] विप्रास ईळते अध्वरेषु । अपांनपान्मधुमतीरपो[9] दा याभिरिन्द्रो वावृधे वीर्याय ( ऋ० सं० १० । ३० । ४ ) ॥ योऽनिध्मो दीदयद्[10]दीप्यतेऽभ्य-

१ क. ख. ४ ( १७ ); ठ. ड; °वति । इति निरुक्तभाष्ये १७ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. २ क ख. थ. °तापान्नपा°. ३ क. ख. ५ ( १८ ); त. द. ५. ४ ग. इति । अ°. ५ क. ख. ग. च. ज. अपान्नपा°. ६ क. ख. घ. झ. ट. ठ. ड. °यतस्तु°. ७ क. ख. ५ ( १८ ); ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये १८ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ८ क. ख. छ. त. द. ईळते. ९ क. ख. थ. अपान्नपा°. १० छ. त. द. ‘ °दीद्यत् ’ नास्ति.

न्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपांनपान्मधुमतीरपो देह्यभिपवाय याभिरिन्द्रो वर्धते[२] वीर्याय वीरकर्मणे यमो यच्छतीति सतस्तस्यैषा भवति ॥ १९ ॥

योअनिध्मो दीदयदिति[३]। कवपस्यार्षम् । सर्व एव प्रत्यक्षकृतत्वेन

अपांनपात्　गम्यते । हे अपांनपात् यस्त्वम् अनिध्मो अनिन्धनोऽपि दीप्यसे अभ्यन्तरप्रदेशं प्रति अप्सु

वर्तमानः यं च त्वाम् अध्वरेषु यज्ञेषु विप्रा मेधाविन ईळते[४] स्तुवते[५] स त्वमपांनपात् मधुमतीः मधुरसाः मधुरस्वादाः अपो देहि अभिषवाय । याभिः त्वमेव इन्द्रः ईश्वरः सोमपानद्वारेण वर्धेथाः वीर्याय वीरकर्मणे इत्येतत्प्रार्थयामहे ।

' यमो ' ( १२ ) वक्तव्यः । स पुनरेष ' यच्छति ' उपरमयति

यमः कस्मात्　जीवितात्सर्वं भूतग्राममिति यमः । अत एव बलवानिति मध्यमः । ' तस्यैषा भवति '॥१९[६]॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ( ऋ० सं० १० । १४ । १ ) ॥[७] परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इत्यवतिर्गतिकर्मा बहुभ्यः पन्थानमनुपस्पाशयमानं वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्येति दुवस्यती राध्नोतिकर्माग्निरपि यम उच्यते तमेता ऋचोऽनुप्रवदन्ति ॥२०[९]॥

१ क. ख. थ. द. सोऽपान्नपा°. २ क. ख. ६ ( १९ ); त. द. ६. ३ म. °दिति । क°. ४ क. ख. ग. घ. ज. थ. झ. ईलते. ५ क. ख. घ. झ. ट. ठ. ड. स्तुवन्ति. ६ क. ख. ६ ( १९ ); ठ. ड. °वति । इति निरुक्तटीकायां ४ ध्याये १९ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ७ ङ. छ. त. द. पन्थामनु°. ८ छ. त. द. °राप्नोति°. ९ क. ख. ७ ( २० ); त. द ७.

परेयिवांसमिति[1] । यमस्यार्षम् । याम्ये पशौ वपायां विनियोगः ( मैत्रा० सं० २ । ५ । ११ ) । परेयिवांसं यमः पर्यागतवन्तं सर्वतः प्राप्तवन्तम् । कान् पुनः । प्रवत उद्वतो निवतश्च भूतसंघातान् । ' प्रवतः ' इति मन्त्रे ' उद्वतो निवतः ' इति भाष्यकारोऽध्याजहार तथा सामर्थ्यात् । प्रवतो मनुष्या उद्वतो देवा निवतस्तिर्यञ्चः तथा गत्युपपत्तेः । तमेतमेवं महीः महतीः भूतजातीः परेयिवांसं बहुभ्यः पुण्यकृद्भ्यः पापकृद्भ्यश्च[2] पन्थानम् अनुपस्पाशयमानम्[3] । अमुना मार्गेणायं प्राणी जीवनादुत्सर्पति तमेव तस्य स्पाशयित्वा बद्ध्वा तस्कर इव तत्रैव सर्पज्वरादिरूपो भूत्वा जीविताद्दुपर्यस्यामीत्येवमनुपस्पाशयमानं[4] तमेतमेवंकर्माणं वैवस्वतं विवस्वतः पुत्रं संगमनं जनानां सममेव चक्षुः कृत्वा योऽस्माल्लोकादमुं लोकं यथाकृतकर्मफलोपभोगवशेन जनान्[5] गमयति तमेतमेवं[6] यमं राजानम् ईश्वरं सर्वप्रागभूतां हे यजमान हविषा अनेन पशुलक्षणेन दुवस्य । राध्नुहीत्यर्थः । परिचरस्वेत्यर्थः ।

' अवतिर्गतिकर्मा ' इत्येतदत्र निर्वचनं कथं संबध्यत इति विज्ञातव्यम् । अथवा । प्रवत इत्यवतिरेवायमादिलुप्तः प्रपूर्व इति भाष्यकाराभिप्रायः ।

तत्प्रसंगाद्वा शब्दसारूप्याद्वा निराह । ' अग्निरपि यम उच्यते ' इति विचारोपप्रदर्शनाय । ' तमेता ऋचोऽनुप्रवदन्ति ' इति प्रतिज्ञातार्थोपपादनाय । यथाग्निरपि यमशब्देनोच्यते तथेमा ऋचोऽनुप्रवदन्ति ॥ २०[7] ॥

**सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका । यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ( ऋ० सं० १ । ६६ । ४ ) ॥ तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ( ऋ० सं० १ । ६६ । ५ ) ॥ इति द्विपदाः सेनेव सृष्टा भयं**

---

१ ग. °मिति । हविर्द्धानस्यार्षम्; च. ज. °मिति। हविर्द्धानस्यार्षम्. २ ग. च. ज. ' °बहुभ्यः पुण्यकृद्भ्यः पापकृद्भ्यश्च ' नास्ति. ३ च. °पश्याश°. ४ घ. झ. ट. ठ. ड.°पयास्था°; च. °पयस्या°. ५ घ. झ. ट. ठ. ड. °नांनामयति. ६ क. ख. घ. झ. ट. ठ. ड. तमेवं. ७ क. ख. ७ ( २० ); ठ. ड. °दन्ति° । इति नैरुक्तभाष्ये चतुर्थेऽध्याये ( ड. ४ ध्याये ) २० खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीका भयप्रतीका बल[1]प्रतीका यशःप्रतीका महाप्रतीका दीप्तप्रतीका वा । यमो ह जात इन्द्रेण सह संगतः । यमाविहेह मातरेत्यपि निगमो भवति । यम इव जातो यमो जनिष्यमाणो जारः कनीनां जरयिता कन्यानां पतिर्जनीनां पालयिता जायानां तत्प्रधाना हि यज्ञसंयोगेन भवन्ति । तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति । तं वश्चराथा चरन्त्दा पश्वा[2]हुत्या वसत्या च[3] निवसन्त्यौपधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं भोगैर्मित्रः[4] प्रमीतेस्त्रायते संमिन्वानो द्रवतीति वा मेदयतेर्वा तस्यैषा भवति ॥ २१ ॥

---

सेनेव सृष्टेत्येवमाद्याः[5] । पराशरस्यार्षम् । एता द्विपदा विराजः । अग्निरत्र यमः प्रातरनुवाकाश्विनयोर्विनियोगः । सेनेव सृष्टा[6] निश्चिता । अथवा । सेनापतिना विसृष्टा प्रेरिता । अमं दधाति भयं वा बलं वा दधाति[7] । भयं परेभ्यो बलं स्वेभ्यः । अथवा । अतर्किता भयं ददाति अतर्किता बलं ददाति प्रणेतुः । अस्तुर्न दिद्युत् । अस्तुरिव क्षेप्तुर्यथा दिद्युत् आयुधम् । महाप्रतीका । महती या दृश्यते । प्रतीकं दर्शनम् । भयप्रतीका दर्शनादेव भयानका । दीप्तप्रतीका वा दीप्तदर्शना । भयं वा बलं वा ददाति । स्वेभ्यः परेभ्यश्चेति वर्तते । का पुनरसाविति । अग्नेरर्चिः । रक्षोभ्यो भयं ददाति स्वेभ्यो बलम् । यमो ह जातो यमो जनित्वम् । यस्येदमेवंलक्षणमर्चिः स एव यमः अग्निः सर्वमिदं जातं जनिष्यमाणं च ।

कथमेतद्गम्यते पार्थिवोऽग्निर्यमशब्देनोच्यते न मध्यमो नोत्तमो वेति । तावपि हि यमावुच्येते । यतो निगमान्तरेण विभज्य दर्शयति । ' यमाविहेह मातरेत्यपि निगमो भवति ' । यत्रैप पादस्तस्मिन्मन्त्रे शक्यते यमशब्देनाग्निरुच्यत इति विभावयितुं व्यपदेशः । तद्यथा । ' बाळ्[8]था

१ छ. त. द. ' बलप्रतीका यशःप्रतीका ' नास्ति. २ ङ. ध. ठ. ड. पश्वाहु॰; थ. पश्वाँहु॰ श्वा. ३ ङ. थ. ध. ठ. ड. समृद्धं. ४ क. ख. ८ ( २१ ); त. द. ८. ५ ग. ॰माद्याः । प॰. ६ ग. ज. आक्षिप्ता; च. अक्षप्ता; ट. प्रेरिता॰ आक्षिप्ता. ७ ध. ट. ठ. ड. ददातु. ८ ग. बळित्थं; घ. ज. व. झ. बळित्थं.

महिमा वामिन्द्राग्नी पनिष्ठ आ । समानो वां जनिता भ्रातरा युवं यमाविहेहमातरौ ’ ( ऋ० सं० ६ । ५९ । २ ) ॥ भरद्वाजस्यार्षम् । ‘ बळ् ’ इति सत्यनाम ( निघ० ३ । १० । १ ) । हे इन्द्राग्नी इत्था सत्यम् अमुना प्रकारेण । यः सूक्ते महाभाग्यप्रकारोऽधिकृतस्तमित्थेत्यभिनयेनोपदिशन् ब्रवीति । महिमा माहाभाग्यं वां युवयोः आ पनिष्ठः सर्वतोऽतिशयेन स्तुत्यः । यौ युवामेवमतिमहानुभावौ तयोः समानो वां जनिता जनयिता सूर्यः । तौ युवामेवं कृत्वा एकपितृकौ एकजन्मानौ यमौ भ्रातरौ । इहेहमातरौ । इह च पृथिवीलोके इह चान्तरिक्षलोकेऽवस्थितौ मातारौ सर्वस्य लोकस्य निर्मातारौ । एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः । इन्द्राग्नी यमाविति यमशब्दो मध्यमस्थानपृथिवीस्थानयोः । अत्रापि द्वयोर्यमयोरिह चेह च निर्माताराविति प्रथमेन ‘ इह ’ शब्देन अग्निर्यम इति लक्ष्यते । तस्मादिहापि ‘ यमो ह जातो यमो जनित्वम् ’ इति युक्तं यदग्निरेवोच्यते । जारः कनीनां पतिर्जनीनाम् । स एवाग्निः जारो जरयिता कन्याभावस्य । यदा ह्यग्निसंनिधावूढा भवन्त्यथ तासां कन्याभावो जीर्णो भवति । पतिर्जनीनां पालयिता जायानाम् । कथम् । तत्प्रधानाः संपद्यन्तेऽग्नौ व्रतोपगमनादाव्रतविमोकादग्निपारतन्त्र्यात् ।

अस्यामृचि इन्द्राग्नी द्वावपि यमौ

यथा वै तासां यथाविकृतो यमो ह जातो यमो जनित्वमित्यग्निरेव यमो ह जातः पतित्वेन कन्याभावस्य जरयिता तथायमपरो निगमः स्फुटतरः । ‘ तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति ’ । ‘ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ’( ऋ० सं० १० । ८५ । ४० ) ॥ सूर्याया आर्षम् । विवाहे विनियोगः । हे कन्ये त्वमुच्यसे । सोमः त्वां प्रथमो विविदे विन्नवान् प्राप्तवान् सौम्ये

कन्यानामग्निस्तुरीयः पतिः

१ ग. च. ज. थ. झ. ट. वामिति । भरद्वा°. २ क. ख. घ. झ. ट. °र्षम् । बृहती । ब°. ३ क. ख. ‘ बट् ’ इति; ग. च. ज. घ. झ. ट. बल्. ४ सर्वेषु पुस्तकेषु ‘ महा ’. ५ ग. ज. ठ. ड. मातरौ. ६ ग. ज. ‘पायना°; ट. ‘पगमना° पाय. ७ च. ज. घ. झ. ट. ‘विद इति । सूर्या°; ग. °विद इति । सू°.

प्रथमकौमारके । गन्धर्वो विविद उत्तरः । उपजायमानचारुताङ्गप्रविभागस्वैरसौष्ठवामोपदनङ्गाङ्गसमाहितहृदयां गन्धर्वो विश्वावसुः त्वां विविदे विन्नवान् । अथ पुनरिदानीं वैवाहिके उपगतायाः कर्मणि तृतीयः अग्निष्टे पतिः । तृतीयस्तवायमग्निः । अत उद्वहनात्तरं तुरीयः चतुर्थः तवायं मनुष्यजाः पतिरित्येवमनेनापि मन्त्रेण समवैति जारत्वं पतित्वं चाग्नेः । एवं चेत् यमो ह जातो यमो जनित्वम् इति यदधिकृतं सोऽग्निरेवेति सिद्धम् ।

अग्निर्मह्यमथो इमामिति च केचिदधीयते निगममुपचयहेत्वर्थम् ।

तस्मिन्नेवार्थे अन्या ऋक्

स निरुच्यते । 'सोमो ददद्गन्धर्वाय[2] गन्धर्वो ददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्' (ऋ० सं० १० । ८५ । ४१) इति ॥ स एव विनियोगः (मान० गृ० १ । १० । १०)। आर्थं च। सोम एतां प्रथमं कौमारादभ्युह्य गन्धर्वाय ददत् अदात् । अथ गन्धर्वोऽप्येनामभ्युह्य स्वयौवनाधिकारात् अग्नये ददत् । अथाग्निरप्येनामस्मिन् विवाहे संस्कृत्य रयिं धनं च पुत्रांश्च मह्यमदाद् ददाति । अथो अपि च धनेन च पुत्रैश्च सह मह्यमदात् मह्यं ददाविति ।

तमग्निं यमम् । 'वः' इत्यनर्थकः । अथवा । यजमाना ऋत्विग्भिरुच्यन्ते । चराथा चरन्त्या जंगमया पश्वाहुत्या[3] वसत्या च निवसन्त्या ओषध्याहुत्या । जंगमेन स्थावरेण च हविषा । अस्तं न गावो नक्षन्ते । अस्तं यथा गृहं गावः अवश्यं नक्षन्ते आप्नुवन्ति स्वेनोपकारेण सायंवासाय तथेममग्निमुभयलक्षणेन हविषा वयमाप्नुयाम इद्धं समिद्धं भोगैः सर्वभोगानामीश्वरं प्रदातारमिति ।

'मित्रः' (१३) कस्मात् । स हि 'प्रमीतेस्त्रायते' । प्रमीतिः

मित्रः कस्मात्

प्रमरणं ततः सर्वलोकं त्रायते वर्षद्वारेण । 'संमिन्वानो द्रवतीति वा' । समन्ततो मिन्वानः उदकेन द्रवत्यन्तरिक्षलोके । 'मेदयतेर्वा' स्नेहनार्थस्य (धा० पा०

१ घ. ट. ठ. ड. स्वरे सो°. २ ग. 'र्वायेति' । स एव°; च. ज. व. झ. ठ. °र्वायेति । स एव°. ३ ड. पश्वाहुत्या.

१० । ८ ) । सर्वं ह्यसावुदकेन स्नेहयति । ' तस्यैषा भवति ' ॥२१॥

---

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत (ऋ० सं० ३ । ५९ । १ )॥ मित्रो जनानायातयति [३]प्रब्रुवाणः शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातं जुहोतिर्दानकर्मा कः कमनो वा क्रमणो वा सुखो वा तस्यैषा भवति ॥ २२ ॥

---

मित्रः

मित्रो जनान्यातयति ब्रुवाण इति । विश्वामित्रस्यार्षम् । अववृष्टहोमे प्रायश्चित्तम् । अग्निहोत्रे पूर्वस्यामाहुतौ विनि[६]योगः ( मान० श्रौ० ३ । २ । ८ )। मित्रो जनान्यातयति ब्रुवाणः । आयातयति कृष्यादिषु प्रवर्तयति तत्कर्मपूर्वकत्वात्कृष्यादिकर्मणाम् । न ह्यवृष्टे कृष्यादीन्यायात्यन्ते । आयातनमारम्भः । तद्यथा । भोजनमायातितमनेनेति । कथमायातयति । प्रब्रुवाणः स्तनयित्नुं कुर्वन् । एवं प्रवर्तयन् कर्मसु ओषधीरुत्पादयन्नन्नद्वारेण स एव मित्रो दाधार धारयति पृथिवीं पृथिवीलोकनिवासिनः सर्वान् । उत द्यां धारयति । अमुना प्रकारेण अनुगृह्णन् स मित्रः कृष्टीः मनुष्यान् [७]अनिमिषन्नभिविपश्यति उपकारद्वारेण । यो हि यस्मा उपकरोति स तेन सम्यक् दृष्टो भवति । योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य तस्मै मित्राय हव्यं घृतवत् घृतोन्मिश्रं जुहोत [८]जुहुत हे मनुष्याः ।

१ क. ख. घ. च. झ. ट. ठ. ड. स्नेहे॰ति. २ क. ख. ८ ( १७ ); ठ. °वति । इति निरुक्तटीकाभाष्ये ४ ध्याये २१ खण्डः; ड °वति । इति निरुक्तभाष्ये २१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति ३ ङ. थ ध. ठ. ह. °ति ब्रुवा°. ४ क. ख. ९ ( २२ ) त. द. ९. ५ ग. इति । वि°; ठ. ड. यातयतीति । वि°. ६ ग. च. ज. 'योगः । आयातयति'. ७ क. ख. घ. झ. ट. ठ. ड. अनिमिषन्नभिचष्टे अनिमिष°. ८ ग. च. ज. झ. ' जुहुत ' नास्ति.

'कृष्टयः' इति मनुष्यनाम । तत्कस्मात् । नित्यं हि ते कर्मवन्तो

**कृष्टयः कस्मात्** भवन्त्यारम्भशीलत्वात्[1] । 'विकृष्टदेहाः वा'[2] । संसृष्टदेहा अन्ये पशवो गवादयः । ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति । स तेषां संकर्षः । मनुष्यास्तु कामतः प्रसारयन्त्यङ्गानि । स तेषां विकर्षो देहस्य ।

'कः' (१४) इति वक्तव्यम् । स पुनरेष महानात्मा सर्वात्मा प्राणबुद्धिसत्त्वः । उदाहरिष्यति च 'अथैतं[3] महान्तमात्मानम्' अधिकृत्य (निरु० १४ । १) 'क ईयते तुज्यते' (निरु० १४ । २६) इति । स कथं मध्यमो भवति । भवति हि तस्मिन्[4] सूक्ते 'आपो ह यद् बृहतीर्विश्वमायन्गर्भं दधानाः' (ऋ० सं० । १० । १२१ । ७) इति[5] ।

**कः कथं मध्यमः** विज्ञायते च 'प्रजापतिर्वै कः' (तै० ब्रा० २ । २ । ५) इति । प्रजापतिश्च मध्यमः । तथा च मन्त्रवर्णो भवति राज्ञोऽभिषेकमधिकृत्याश्वमेधे 'प्रजापतिश्चरति गर्भे अन्तः' इति सप्तानां प्रथमा । तयोपरिष्टादभिषिक्तस्य[6] जुहुयात् इति । तस्माद्भवति मध्यमः । स कस्मात्कः । 'कमनो वा' ।

**कः कस्मात्** कामिनां कामेष्वर्थेषु साधनम् । 'क्रमणो वा' । क्रमणसाधनम् । स्वयमेव वा क्रामति । 'सुखो वा' । कमेव वा कः । सुख इत्यर्थः । तस्यैषा भवति[7] ॥२२॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम (ऋ० सं० १० । १२१ । १) ॥ हिरण्यगर्भो हिरण्मयो गर्भो हिरण्य-

१ घ. झ. ट ठ. ड शीलकत्वात् . २ क ख. घ. झ. ट. ठ. °धेनं. ३ क. ख. घ. झ. ट. ठ. ड. °नामत्यधि°. ४ क. ख. घ. झ. ट. ठ. ड. तस्मिन्; ग. ज. भवति तस्य°. ५ ट. ड. दधाना जनयन्तीरग्निम् इति (ड. °यन्तीर्यज्ञम् इति). ६ क. ख. घ. झ. ट. ठ ड. °पविष्टा ; च. °परिष्टा० वि. ७ क. ख. ९ (२२); ट. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थेऽध्याये द्वात्रिंशः (ट. °ध्याये २२) खण्डः; घ छ. ट. ज अङ्का नास्ति.

**मयो गर्भोऽस्येति वा गर्भो गृभेर्गृणात्यर्थे गिरत्यनर्थानिति वा यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति समभवदग्रे भूतस्य जातः पतिरेको बभूव स धारयति पृथिवीं च दिवं च कस्मै देवाय हविषा विधेमेति व्याख्यातं विधतिर्दानकर्मा सरस्वान् व्याख्यातस्तस्यैषा भवति ॥ २३ ॥**

हिरण्यगर्भः समवर्तताग्र इति । हिरण्यगर्भस्यैवार्षम् । सर्वात्मकत्वात्तदार्षत्वेऽपि मन्त्रस्य प्रथमपुरुषयोगोऽविप्रतिषिद्धः । अथवा । परस्य ब्रह्मणो या हिरण्यगर्भावस्था प्रतिकल्पमाविर्भावतिरोभावधर्मिणी बुद्धिपूर्विका नित्या तस्यां च

कः

नित्यो मन्त्रोऽविवक्षिताभिधानाभिधातृक आश्रयमात्रेणाभिधातारमुपादाय प्रवर्तमानोऽनुवर्तत्यविवक्षितः पुरुषयोगः । कृतकत्वे हि नियमत एवोत्तमपुरुषयोगो मन्त्रस्याभविष्यत् । भूतस्य अस्य उत्पन्नस्य स्थावरजंगमस्य जगतो हिरण्यगर्भः एव अग्रे समवर्तत समभवत् उदपद्यत । तमुत्पन्नमन्विदं सर्वमनूत्पेदे । स च पुनरग्रे जातः सन् तस्य पश्चाद्भूतस्य एकः असपत्नः अद्वितीयः पतिः पाता रक्षिता ईश्वरः स्वतन्त्र आसीत् । कथमिति । स दाधार । यतः पतिः अतः स एव दाधार स एव धारयत्यद्यत्वेऽपि । किमिति । पृथिवीमुत द्याम् । पृथिवीम् अन्तरिक्षम् अपि च द्यां द्युलोकम् । अपि च इमां भूमिम् अन्तरमनुप्रविष्टो बहिश्च वर्षाद्युपकारेण । योऽयमेवंभावः अतिमहानुभावः कः तस्मादस्मै कस्मै काय देवाय हविषा विधेम हविर्दद्मः । अथवा । अनेन चरुलक्षणेनाज्यलक्षणेन वा हविषा तं वयं परिचरेम । 'विधतिर्दानकर्मा' इति । तस्माद्धविःशब्दान्तिरेव ज्यायसी । शतकृष्णलस्य पुरोनुवाक्या ( मैत्रा० सं० २ । २ । २ ) । अथाश्वस्य प्राजापत्ये पशावनेन मन्त्रेण ( मैत्रा० सं० ३ । १२ । १६ ) ॥

अथ हिरण्यगर्भः कस्मात् । स हि[6] 'हिरण्मयो' विज्ञानमयो 'गर्भः' सर्वभूतानां तत्कृतत्वादन्तःप्रकाशस्य । हिरण्मयश्चासौ

१ क. ख. १० (२३); त. इ. १०. २ ग. इति । हि°. ३ क. ख. घ. च. झ. ट. °भाव अ°; ग. ज. °वंभव अ°. ४ च. ट. ड. °ण्यगर्भस्य°. ५ ग. ग. °यतो; ब. °समाप्तेन. ६ ग. घ. ञ 'हि' नास्ति.

गर्भश्चेति समानाधिकरणः । ' हिरण्मयो गर्भोऽस्येति वा ' । शरीरेन्द्रियमनोबुद्धिभावैर्नैतमपेक्ष्य परमात्मानं च विज्ञानप्रकाशमात्रसतत्त्वं सर्वविशेषहारित्वाद्धिरण्मयमपेक्ष्य तत्प्रकृतित्वं च क्षेत्रज्ञस्यापेक्ष्य सोऽस्य हिरण्मयो हिरण्यप्रकृतिगर्भ इति हिरण्यगर्भः । अथ ' गर्भः ' कस्मात् । ' गृभेः ' धातोः गृणात्यर्थे वर्तमानस्य । स्तुत्यो हि गर्भः । ' गिरत्यनर्थानिति वा ' । सर्वाननर्थानसौ गिरति नाशयति । अथ पुनरयं स्त्रीगर्भः कस्मादिति । यत आह । ' यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति ' ।

स्त्रीगर्भस्य मीमांसा

स्वयवयवः स्त्रीरक्तम् । तद्यदासौ पुरुषाच्छुक्रावस्थान् गुणान् गृह्णाति आत्मानं संपृणक्ति अस्थिस्नायुमज्जानः । गुणाश्चास्या रक्तावस्थाः त्वङ्मांसशोणितानि पौरुषेण शुक्रेण गृह्यन्ते । तयैवमितरेतरकोशग्रहणव्यतिषङ्गे रक्तशुक्रयोः स्त्री गर्भो भवति । अथवा । यदा हि स्त्री गुणान् गृह्णाति पुरुषस्य प्रेम्णा गुणाश्चास्याः प्रेम्णा पुरुषेण गृह्यन्ते तदितरेतरानुरागात् प्रमोदः । प्रमुदितयोः संपर्काद्गर्भग्रहणं च । तदेवं गर्भग्रहणहेतुकोऽयमिति प्रहेर्गर्भः ।

' सरस्वान् ( १५ ) व्याख्यातः ' ( निरु० २ । २४ ) सरस्वया । केवलं लिङ्गकृतो विशेषः । ' तस्यैषा भवति ' ॥ २३ ॥

**ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ( ऋ० सं० ७ । ९६ । ५ ) ॥ इति सा निगदव्याख्याता ॥ २४ ॥**

## दशमाध्यायस्य द्वितीयः पादः ॥

सरस्वान्

ये ते सरस्व ऊर्मय इति । वसिष्ठस्यार्षम् । सारस्वते हविषि विनियोगः ( आश्व० श्रौ० ३ । ८ ) । हे

१ क. ख. घ. झ. ट. ठ. ड. °रण्यगर्भमपे°. २ ग. ज. गृहेर्धातोर्गृह्णात्य°. ३ क. ख. घ. झ. ट. ठ. ड. सर्वस्य स्तुत्यो. ४ क. ख. १० (२०); ठ. °वति । इति निरुक्तटीकायां चतुर्थाध्याये २३ खण्डः; ड. °वति । इति निरुक्तटीकायामुत्तरषट्के २४ (?) खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ५ क. ख. ११ (२०); त. द. ११ ६ ङ. थ. ध. ' दश० पाद० ' नास्ति; छ. त. ' दशमाध्यायस्य ' नास्ति; द. इति निरुक्ते उत्तरार्धस्य दशमः. ७ म. इति । ये.

भगवन् सरस्वन् ये[1] ते तव ऊर्मयो यत्कृतोऽपि नभो मेघैश्छादयसि मधुमन्त उदकवन्तो घृतश्चुतो घृतवन्तः उदकप्रक्षराः तेभिः तैः[2] त्वमस्माकम् अविता तर्पयिता भवस्येतदाशास्महे ॥ २४ ॥[3]

पञ्चदशस्य द्वितीयः पादः ।

---

तृतीयः पादः ।

**विश्वकर्मा सर्वस्य कर्ता तस्यैषा[4] भवति ॥ २५ ॥**

'विश्वकर्मा' (१६) वक्तव्यः । स कस्मात् । 'सर्वस्य कर्ता' ।

विश्वकर्मा कस्मात्

यावदिदं किंचिद्भूतं करिष्यमाणं क्रियमाणं च[5] तस्य सर्वस्य कर्ता । वाय्वात्मकत्वात्सर्वचेष्टानां मध्यमः । स कथं सर्वं करोति । पार्थिवाप्यौ धातू तेजसा परिपच्यमानौ वायुर्व्यूहेन विचरन् सर्वमात्रानुप्रवेशी सर्वमेवमत्यद्भुतमचिन्त्यमकृतात्मभि-[6]

स कथं मध्यमः

र्जगत्करोतीति मध्यमः । विश्वकरणाद्विश्वकर्मा । विज्ञायते हि वैश्वकर्मणं[8] हविरधिकृत्य साकमेधेषु । 'अथैष वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवत्' (मैत्रा० सं० १ । १० । १६) इति । भवति चोदकसंबद्धं[9] मयमलिङ्गं विश्वकर्माणमधिकृत्य वैश्वकर्मण सूक्ते 'तमिद्गर्भं प्रथमं दध्र आपः'[10] (ऋ० सं० १० । ८२ । ६) इति । विपुश्चति च वैश्वकर्मणं[11] ग्रहमधिकृत्य विज्ञायते हि 'इन्द्रो वै वृत्रमहन्त्स इमं लोकमभ्यजयदमुं[12] लोकं नाभ्यजयत्तं विश्वकर्मा भूत्वाभ्य-

१ ग. च. ज. 'ये' नास्ति. २ ग. च. ज. 'तैः' नास्ति. ३ ग. च. २४; क. ख. ७ (२४); ठ. °स्महे । इति पञ्चमाध्याये द्वितीयपादः । इति निरुक्तभाष्ये ४ ध्याये २४ खण्डः; ड. °स्महे । इति पञ्चदशाध्याये २ पादः । इति निरुक्तभाष्ये २४ खण्डः ४ क. ख. १ (२५); त. द. १. ५ ग. च. ज. 'च' नास्ति. ६ क. ख. घ. झ. ट. सर्वमिदम°. ७ क. ख. घ. झ. ट. °ति स मध्य°. ८ ग. च. ज. विश्व°. ९ क. ख. घ. झ. ट. ठ ड. °बद्धमस्य म°. १० ठ. ड. 'आपो यत्र० तस्थुरिति' इति सर्वा ऋक्पठ्यते. ११ ग. ज. °कर्मा ग्र°; घ. झ. ट. ठ. ड. °कर्माणं. १२ क. ख. ठ. ड. नु.

जयत्' ( मैत्रा० सं० ४ । ८ । १० ) इति । तस्यैव ग्रहस्य पुरोरुच-मधिकृत्य विज्ञायते[1] ' यदैन्द्रीं वैश्वकर्मणीं विद्यात्तनैव गृह्णीयात् ' इति । स एष एवमादिभ्यो लक्षणेभ्यः सर्वस्थानानुभावित्वेऽपि सति विशेषतो मध्यम इति मध्यमस्थाने समाम्नातः । ' तस्यैषा[2] भवति ' ॥ २५ ॥

---

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः ( ऋ० सं० १० । ८२ । २ )॥ विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संद्रष्टा भूतानां तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह संमोदन्ते यत्रैतानि सप्त[3]ऋषीणानि ज्योतींषि[4] तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतमथाध्यात्मं विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संदर्शयितेन्द्रियाणामेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह संमोदन्ते यत्रेमानि सप्त[3]ऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतं[5]स्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे तत्रेतिहासमाचक्षते विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार तदभिवादिन्येषर्ग्भवति । य इमा[6] विश्वा भुवनानि जुह्वदिति तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥

विश्वकर्मा विमना आद्विहाया इति[7] । भौवनस्य विश्वकर्मणः प्रजापतेरार्षम् । अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां षोडशगृहीतं हूयते तत्र विनियोगः ( मैत्रा० सं० ३ ।

विश्वकर्मा

१ क. ख. घ. झ. ट. ठ. ड. °यते हि. २ क. ख. १ ( २५ ); ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये २५ खण्डः. ३ द. सप्तर्षीणानि. ४ द. °तींष्येतेभ्यः. ५ छ. त. द. तान्यस्मि°. ६ क. ख. २(२६); त. द. २. ७ ग. इति[११] । भौ°; ठ. ड. विमना इति । भौ°.

३।७॥ २।१०।२ )। विश्वकर्मा विमनाः विभूतमनाः विभूतप्रज्ञानः। सर्वत्राप्रतिहतमस्य प्रज्ञानम्। किं प्रज्ञानमेव केवलम्। नेत्युच्यते। आद्विहायाः। अप्यसावात्मना विहायाः। आत्मनापि सर्वप्रकारं महान्। महत्त्वाच्च व्याप्ता[2] एवं सर्वप्रकारं सर्वस्य जगतः। यत एव च[3] महान् अत एव धाता उत्पादयिता सर्वभूतानाम्। उत्पाद्य च विधाता जीवनस्य। जीवतां च साध्वसाधुषु कर्मसु प्रवर्तमानानां परमोत संदृक् परमः प्रकृष्टः अव्यवधानेन संदृष्टा[4] सम्यक् प्रविभागेन द्रष्टा। साध्वसाधुप्रविभागद्रष्टानां तेषां च भूतानां यानि[5] इष्टानि प्रियाणि तस्य विश्वकर्मणो दैवीं संपदमभिसंपन्नानि। कामर्थो[6] वा इषिः। यान्यभीप्सितानि तस्य विश्वकर्मणः। मतानि वा अभिमतानि वा। तस्य विश्वकर्मणः नतानि वा प्रह्वीभूतानि तं विश्वकर्माणं प्रति। तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तेन सहैकीभूतानि विश्वकर्मणा आधिदैविकमात्मानमभिसंपन्नानि। समिषा मदन्ति। इषा उदकेन अद्भिः परिपुताभिः सुसूक्ष्माभिः सह तेन कर्मणा समानम् अविशेषेण मादन्ते। क। यत्र सप्तऋषीन्पर एकमाहुः। यत्रैतानि सप्तऋषीणानि[7] रसानामाकर्षणानि[8] द्रष्टॄणि वा रश्मीन् ज्योतींषि एकं भवन्ति अविभागमुपगच्छन्ति। मण्डले ह्येतेषामविभागः। किं तत्रैव। नेत्युच्यते। यत्र पर एकमाहुः। क्व च पुनः पर एकमाहुः। मण्डलाधिष्ठातारि योऽसौ यज्ञदानतपसां भोक्ता 'हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' (छा० उ० १।६।६) इति विज्ञायते। एकमेव यमाहुर्देवतासतत्त्वविदः। 'इत्यधिदैवतम्'। देवतामधिकृत्य मन्त्रस्य व्याख्यानमधिदैवतम्।

मन्त्रस्याधिदैवतं व्याख्यानम्

'अथाध्यात्मम्'। आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानमध्यात्मम्। कः पुनरयमात्मा। विज्ञानसतत्त्वमात्रं[9] सविशेषविज्ञानप्रसवबीजं यदेकदेशाः

१ ग. च. ज. ज्ञानं. २ ग. ज. व्याप्नोति. ३ क. ख. घ. झ. ट. 'च' नास्ति; च. 'एव—म'. ४ ग. ज. संद्रष्टा. ५ क. ख. घ. झ. ट. ठ. ड. यानि यानि°. ६ क. ख. घ. झ. ट. ठ. ड. कान्त्यर्थो. ७ क. ख. घ. ट. ऋषीणा°. ८ ग. ज. °णानि द्र वा; च. द्रष्टॄणि. ९ क. ख. घ. झ. ट. ठ. ड. सर्वति°.

मध्युता इव सन्तस्ततः कथमप्यविद्याव्यवधानादन्यत्वमिव बिभ्रतः प्रतिशरीरं शास्त्रेण ताद्रूप्यं चावच्छिद्यते । सोऽयमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन स्वविशेषविज्ञानस्य[1] तथाधिकारमनुभवन्[2] हिरण्यगर्भावस्थामधिदैवमित्युच्यते । अथ पुनरस्य शरीरावस्थासु वर्तमानस्तदाधिदैवतमनपेक्ष्य प्रतिशरीरं[3] यद्विश्वकर्मभावमनुभवन् मन्त्रेण व्याख्यायते तदध्यात्ममस्य ।

आत्मन एकत्वेऽपि तस्याधिदैवाध्यात्मे इति द्वे रूपे

विश्वकर्मा सर्वस्य कर्ता परमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन वर्तमानस्तत्कृतत्वाद्वाह्योः क्रियापरिस्पन्दस्य । न केवलं सर्वक्रियाशक्तिमान् । किं तर्हि । विमनाश्च विभूतमनाः सर्वप्रज्ञातः[4] सर्वतोमुखाभिः विशेषविज्ञानशक्तिभिः । आद्विहायाः । अपि च विहायाः महान् । विज्ञायते हि 'स वा एष महानात्मा अन्नादो वसुदानः' ( बृह० उ० ४ । ४ । २४ ) इति । न केवलं महान् । किं तर्हि । धाता स्रष्टा स्वशक्तिविक्षेपस्य । विधाता च तद्योग्यानां विषयाणाम् । विक्षितविहितानां च तेषां परमः प्रकृष्टः[5] इन्द्रियाणां संदर्शयिता तत्कृतत्वाद्विषयविषयिसंबन्धस्येन्द्रियाणां च तदधिष्ठितानां प्रतिविषयमालोकसामर्थ्योपजननात् । तस्य विश्वकर्मणः परमात्मनः तेषां स्वशक्तिविक्षेपक्षेत्रज्ञविभूतीनां[6] यानि इष्टानि पूर्ववत्परमात्मज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तानि[7] इषा अन्नेन सह मोदन्ते तृप्यन्ति । क । यत्र सप्तऋषीन्परेमानि सप्तर्षीणानि[8] इन्द्रियाणि द्रष्टूणि[9] इन्द्रियाणि ज्योतींषि एकमाहुः । क । बुद्धौ । तस्यामपि ह्येतेषामेकत्वमस्ति[10] । किं तत्रैव । नेत्युच्यते । पर एकमाहुः । न यतः परतरमस्ति तस्मिन्परे[11] विश्वकर्मणि यदन्नं शक्तिमात्रं यदुपविष्टम्भात्परमात्मा नित्यतृप्तस्तेनान्नेन परमात्मनि तद्विज्ञानोपासनात्ताद्रूप्यमु-

मन्त्रस्याध्यात्मं व्याख्यानम्

1 क. ख. ग. ज. घ. झ. ट. ठ. ड. 'विशेषेण विज्ञा°; च. 'विशेषविज्ञा' षेण. 2 क. ख. च. घ. झ. ट. ठ. ड. 'धिकारमनु°. 3 क. ख. घ. झ. ट. ठ. ड. 'रीरं क्षेत्रज्ञत्वेन व°. 4 ग च. ज. विभूतप्रज्ञातः स°. 5 क. ख. घ. झ. ट. ठ. ड. उत्कृष्टः. 6 ग. च. ज. °क्षेपक्षेत्र°. 7 ग. च. ज. 'तानि' नास्ति. 8 ग. ज. सप्तरिषणानि; च. सप्तर्षीणानि° रि; ट. सप्तर्षीणानि° रि; घ. झ. सप्तर्षणानि. 9 ग. च. ज. द्रष्टूणि; ठ. ड. द्रष्टानि. 10 क. ख. घ. झ. ट. ठ. ड. °त्वमस्ति वति. 11 क. ख. घ. झ. ट. ठ. ड. 'परतरे वि°.

पगतास्तेन सहभुता मोदन्ते निरशनापिपासा नित्यतृप्ता अतीतशोकमोहजरामृत्यश्च आत्मविद इत्येवमाहुः सतत्त्वदृशो ब्राह्मणाः । यथा चानुपक्षीणस्वधाशक्ति नित्यतृप्तं सर्वभावपरं तत्परं ब्रह्म यदात्मविदः प्रतिपद्यन्ते तथा पुराणसूक्तेऽपि परमेष्ठिन आर्षं मन्त्रो दर्शयति । ' स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ' ( ऋ० सं० १० । १२९ । २ ॥ निरु० ७ । ३ ) इति । एवं सर्वत्र संभवो[1] यावद्विषयो मन्त्राणां योऽय इत्युपप्रदर्शनायोभयथा मन्त्रो वर्णितः ।

' इत्यात्मगतिमाचष्टे ' । अमुना प्रकारेण वर्ण्यमान । एष मन्त्र आत्मगतिमाचष्टे प्रख्यापयति । यथा चेयमात्मगतिवाचिका ऋक् ' तत्र ' एतस्मिन्नर्थे ' इतिहासमाचक्षते ' आत्मविद इतिवृत्तं परकृत्यर्थवादरूपेण । यः कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको[2] वार्थ आख्यायते दिष्टचैदितार्थावभासनार्थं[3] स इतिहास इत्युच्यते । स पुनरयमितिहासः सर्वप्रकारो[4] नित्यमविवक्षितस्वार्थस्तदर्थप्रतिपत्तॄणामुपदेशपरत्वात् ।

विश्वकर्मण आत्मयागे इतिहासः

' विश्वकर्मा ह[5] भौवनः ' । यथोदितमिदं वैदिकं कर्म संबन्धदर्शनेन यः सर्वं करोति सर्वात्मकत्वात्सर्वस्य वैश्वकर्मणीमवस्थामात्मन्युन्नीय स यजमानो विश्वकर्मा भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम् । तथाहि विज्ञायते ' हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि ' ( शत० ब्रा० १३ । ७ । १ । १ ) इति । तथा च विदुषो दर्शनकृतो[6] सर्वमेधसंपत्सर्वकर्मसु । विज्ञायते ह्यग्निहोत्रमधिकृत्य ' स यत्सायं जुहोत्याग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनु सर्वं तद्यथानेन सकृत्सर्वं तेनेष्ट्वा लोकं जयेत तावदु ह प्रातराहुत्या लोकं जयते यस्यैते आहुती[7] न बद्धं[8] यावज्जीवमाप्नोति स हि बहूनि च न बद्धान्येतयोर्देवतयोरन्यतरामनु ' इति । न[9] बद्धमित्यनन्तमुच्यते । तदेवं यस्मिन् कस्मि-

विदुषः सर्वकर्मसु सर्वमेधः सम्यग्ज्ञानेन संपद्यते

१ ग. च. ज. संभावो. २ ट. ड. °भौतिकमेवार्थ आख्यापयते°. ३ ग. च. ज. दिग्गुदि°. ४ क. ख. व. झ. ट. ठ. ड. °कारो हि नि°. ५ ठ. ड. ' ह ' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °कृतः. ७ ग. च. ज. नवर्द्धया जीवं नाप्नोति°. ८ ग. च. ज. °श्च निबद्धा°. ९ ग. च. ज. न विबद्ध°.

श्मिन्[1]मेवे कर्मणि अग्निहोत्रादौ सर्वः सर्वेण सर्वस्मिन् सर्वस्यै सर्वार्थे हुत्वात्मानं सर्वमेवं[2] भवतीति समासार्थः । स एष सर्वस्य विदुषः सर्वः सर्वहुद्यज्ञः सर्वभावाय संपद्यते दर्शनतः । यो हीतरः सर्वमेधो निरूढसंज्ञोऽहीनस्तद्यथा त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयाप्तोर्यामौ चेति

निरूढसंज्ञात्सर्वमेधादयं सर्वमेधो भिन्नः

तत्र 'स आत्मानमप्यन्ततो जुहवांचकार' इत्ये[3]तदात्महोमस्या[4]विधानान्नोपपद्यते । दर्शनतस्तु सर्वमुपपद्यते । 'सर्वभूतानि[5] विशेषान् सामान्यात्मनि जुहाव पश्यन् सामान्यं चात्मानं विशेषे जुहाव पश्यन् सर्वकर्मसु स्वयमेव'। अयमात्मयाजीत्युच्यते । यमधिकृत्य पृष्टं 'तदाहुः । आत्मयाजी श्रेया३न् देवयाजी३ (शत० ब्रा० ११।२।२।१३) इति'। यथा[6] चैतदेवमधिदैवविद आत्मवित् श्रेयान्यमधिकृत्य 'विश्वकर्मा विमना आद्विहायाः' इतीयमृगात्मगत्या निरुक्ता तस्यैवार्थस्येतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी 'एषा ऋग्भवति'। यथा। 'य इमा

विदुषः सर्वमेधसंपदस्यामप्यृचि दृश्यते

विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश' (ऋ० सं० १०।८१।१)॥

अने[7]केषां समानप्रयोगदर्शनाधिकारवतां यो नाम कश्चित् । किमिति । एवं न्यसीदत् एवं कर्मण्यङ्गभावं[8]मुपजगाम । कथम् । ऋषित्वेन होता द्रव्यगुणकर्मदेवतायाथार्थ्यद्रष्टृत्वेन । विश्वा भुवनानि जुह्वत् सर्वभूतान्यमुना सर्वमेधसंपद्दर्शनप्रक्रमेण जुह्वत् हावयन्[9] । तस्य किमिति । स आशिषा । आशीः प्रार्थना कामः प्रयोगदर्शनहेतुः सर्वमिदमहं स्यामिति । येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त द्रविणमिच्छमानः प्रयोगजनितापूर्वफलं सर्वभावमिच्छन् । तत्किं[10] नाप । नेत्युच्यते । आप । कथमिति ।

१ ग. ज. श्मिन्सर्वे क°; च. °श्मित्सेधे. २ क. ख. घ. झ. ट. ठ. ड. 'मेवं भ°. ३ क. ख. घ. झ. ट. ठ. ड. °इति । स एनदा°. ४ क. ख. घ. च. झ. ट. ठ. ड. °मस्य वि°. ५ ग. ज. °द्यते । भूता°. ६ ग. यथा°उ°य°. ७ क. ख. च. ज. घ. झ. ट. °जुह्वदिति । अने°; ग. जुह्वदिति । अने°. ८ ग. च. ज. °भाव्यमु°. ९ क. ख. घ. ट. ठ. ड. अहावयत्; ग. ज. हावयत्; झ. 'हावयन्' नास्ति. १० ग. च. ज. °त्किमाप.

प्रथमच्छत् । प्रथमोऽग्रजत्वात् । प्रजापतिभावेन मुख्यस्य[1] छादयिता यतः संपदे तथा सन् अवरान् पश्चादुत्पन्नानस्मदादीन् विशेषान् आविवेश व्याप्तवान् व्याप । यस्यैवं प्रयोगफलयोर्वृत्तिः स नः पिता जनिता सोऽस्माकं पिता पाता[2] रक्षिता चेत्येवं विजानीमः । अतस्ताद्भाव्यमश्नुवीमहीति ।

यथा चैतदेवं नान्यथेति तथेयम् ' उत्तरा ऋग्भवति ' बहुतराय ' निर्वचनाय[3] ' ॥ २६ ॥

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ( ऋ० सं० १० । ८१ । ६ ) ॥ विश्वकर्मन्हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च मुह्यन्त्वन्ये अभितो जनाः[4] सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता तार्क्ष्यस्त्वष्ट्रा व्याख्यातस्तीर्णेऽन्तरिक्षे[5] क्षियति तूर्णमर्थं रक्षत्यश्नोतेर्वा तस्यैषा भवति ॥ २७[6] ॥

---

विश्वकर्मन्हविषा[7] वावृधान इति[8] । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते । हे विश्वकर्मन् प्रयोगावस्थित त्वमुच्यसे । अनेन हविषा सर्वमेधदर्शनसंपदादियुक्तेन त्वं वर्धमानो विश्वकर्मत्वमापद्यमानस्तत्फलविपाकप्राप्तिकाले स्वयं यजस्व स्वयं संगच्छस्व व्याप्नुहि पृथिवीं च दिवं च । सर्वव्यापी भव । अपि च । तत्रैव तस्मिन्[9] दर्शनकृते महिम्नि मुह्यन्त्वन्ये अभितो जनासः । मोहमुपगच्छन्तु अभितः सर्वतस्ते जना ये त्वदुपासनापराङ्मुखा[10]स्तव[11] सपत्नाः समानं पतित्वमिच्छन्ति ।

विश्वकर्मदेवता अन्या ऋक्

१ म. च. ज. मुख्यच्छाद°. २ क. ख. घ. झ. ट. त. द. पाता जनयिता र°. ३ क. ख. २ ( २६ ); ठ. ढ. °नाय । इति निरुक्तभाष्ये चतुर्थाध्याये षड्विंशतिः ( ठ. २६ ) खण्डः; इतरेष्वङ्को नास्ति. ४ छ. त. द. जनासः. ५ क. ख. छ. त. द. तीर्णे अन्त°. ६ क. ख. ३ (२७); त. द. ३. ७ ठ. ढ. हविषेति । प्रयो°. ८ म. इति । प्र°. ९ क. ख. घ. झ. ट. तत्रैतस्मिन्. १० म. च. ज. °पासाप°. ११ क. ख. घ. झ. ट. ठ. ढ. °खाः सन्तस्तव.

अथ पुनः इह त्वद्दर्शनोपासनाकर्मणि वर्तमानानां भवे मघवा सर्वधनेशानः । सूरिः मेधावी सर्वत्राप्रतिहतप्रज्ञानः प्रज्ञाता विशेषतोऽस्माकमस्त्वित्येतदाशास्महे ।

त्वष्टा विश्वकर्मेत्यधिभूतप्रधानाः पुराणविदः । तथापि कलाकौशलादिसर्वज्ञानहेतुको नामप्रतिलम्भ इत्यविप्रतिषिद्धम् । एवं सर्वासु देवतासु ।

' तार्क्ष्यः ' ( १७ ) इति वक्तव्यम् । स पुनरेव ' त्वष्ट्रा व्याख्यातः ' ।

तार्क्ष्यः कस्मात्

तद्यथा । ' तूर्णमश्नुते ' इत्येवमादि ( निरु० ८ । १३ ) । अथवा ' तीर्णे अन्तरिक्षे ' सर्वतो गते ' क्षियति ' निवसति । अथवा । ' तूर्णम् ' उदकाख्यं ' रक्षत्यश्नुते वा '। अर्थविकल्पेन तूर्णशब्दात्पूर्वपदं रक्षतेरश्नोतेर्वोत्तरपदम्[2] । ' तस्यैषा भवति ' ॥ २७ ॥

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ( ऋ० सं० १० । १७८ । १ ) ॥ तं भृशमन्नवन्तं जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति कमन्यं मध्यमादेवमवक्ष्यत्[3]तस्यैषापरा[4] भवति ॥ २८ ॥

---

त्यमू षु वाजिनमिति[5] । अरिष्टनेमेरार्षम् । विषुवति निष्केवल्ये

तार्क्ष्यः

शस्यते । ' सद्यश्चित् ' ( ऋ० सं० १० । १७८ । ३ ) इति च । यस्तार्क्ष्यो वाजी वेजनवान् भयदाता वा[6] परेभ्यो बलवान् वा तं देवजूतं देवैर्गतं परत्वेन ज्ञातं वा परोऽयमस्माकमिति । देवप्रीतं देवैर्वा समानप्रीतम् । सहावानं सहो

१ ग. घ. ज. भवा. २ क. ख. ३ ( २७ ); ठ. ड. °ति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये ( ठ. ४ ध्याये ) २७ खण्डः; ग. च. वर्जमितरेष्वङ्का नास्ति. ३ छ. द. °वक्षत्त°. ४ क. ख. ४ ( २८ ); त. द. ४. ५ ग. °मिति । अ°. ६ क. ख. व. झ. ट. ठ. ड. ' वा ' नास्ति.

बलं तेन तद्वन्तम् । एतदेव मध्यमलिङ्गम् । तरुतारं तारयितारं रथानां रंहितॄणां भूतानाम् । गतिमतां गमयितारमित्यर्थो बलहेतुकत्वाद्गमनस्य । तमेवमादिगुणयुक्तम् अरिष्टनेमिं केनचिदप्यप्रतिहतवज्रप्रहरणम् । नेमिरिति वज्रनाम । पृतनानां जेतारम् । आशुं शीघ्रं स्वस्तये आत्मनः स्वस्त्ययनाय सुष्ठु वयमेतस्मिन्कर्मण्याह्वयामहे ।

'तस्यैषा परा भवति'। सा पुनः किमर्थम् । बलकृतिरुपप्रदर्शिता । वर्षकर्मोपप्रदर्श्यतेऽनया । सत्यामपि हि बलकृतौ पक्षिराजे गरुत्मति संदेहोऽसाश्वपि बलवांश्च तार्क्ष्यनामा च । वर्षकर्म त्वसमानं तेनास्य । अतश्चोक्तमेतदेव विचारास्पदमपेक्ष्य 'कमन्यं मध्यमादेवमवक्ष्यत्' इति ॥२८॥

---

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ( ऋ० सं० १० । १७८ । ३ ) ॥ सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुं मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा मन्यन्त्यस्मादिषवस्तस्यैषा भवति ॥ २९ ॥

---

सद्यश्चिद्यः शवसा पञ्च कृष्टीरिति । सद्योऽपि यस्तार्क्ष्यो बलेन तनोत्यपो

तार्क्ष्य एव

वर्षभावेन । 'सद्यः' शब्दो लक्षणार्थोऽद्य ईवः परश्वः परुत्परारि चेति । 'चित्' इत्यप्यर्थे ।

न कदाचिदप्यन्यः सर्वदा तार्क्ष्य एवेति । कं प्रत्यपस्तनोति । पञ्च कृष्टीः

१ ग. घ. ज. °वक्षत्. २ क. ख. ४ ( २८ ); ठ. इति । इति निरुक्तभाष्ये ३ ध्याये २८ खण्डः; ड. °इति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये २८ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ३ छ. त. द. 'वधकर्मणो' नास्ति. ४ क. ख. मन्युं त्वस्मा°; छ. त. द. ठ. ड. मन्युंत्यस्मा°. ५ क. ख. ५ ( २१ ); त. द. ५. ६ ठ. ड. °श्चिद्य इति. ७ ग. °रिति । स°. ८ ग. ज.
९८ श्वः वयः श्वः पत्परा°; च. श्वः वयपरुत्प°. ९ क. ख. च. ठ. ड. किं.

३३

पञ्च मनुष्यजातानि प्रति ब्राह्मणप्रमुखा[1]न्निषादपञ्चमान्वर्णान्प्रति । तदनुग्रहपूर्वकत्वात्सर्वलोकानुग्रहस्य कृष्टिग्रहणेन तद्विवक्षा । कथम् । सूर्य इव ज्योतिषा । यथा सूर्यो ज्योतिः प्रकाशं लोकानुग्रहाय तनोति तथा तार्क्ष्यो अपस्तनोति । यथा हविषा विधेमेति नम्यते तत्र कस्मै देवायेति संप्रदानश्रुतेः संप्रदानवैधुर्याय ( निरु० १० । २३ ) एवमिहाप्युपमानोपमेयकारकसंबन्धवैधुर्याय ज्योतिरिति नम्यते । कस्मात्पुनरयमपस्ततानेति । इतो यस्मात् सहस्रसाः शतसा अस्य रंहिः । बहूंश्च बहुतरांश्च प्रकारान्मेघविदारणाय भजते अस्य तार्क्ष्यस्य रंहिः गतिः । अपि च । एवमसह्यास्य गतिः न स्मा वरन्ते नैव एताम् अस्य वारयन्ति न प्रतिबद्धुं शक्नुवन्ति केचनातिवेगवत्त्वात् । कथम् । युवतिं न शर्याम् । अतिबलवता धनुष्मता मुक्तां शरमयीमिषुम् । अन्येन वा[2]न्येन वा[3]काशप्रदेशेन प्रति[4]मिश्रयन्तीमात्मानम् । य एवमादिगुणयुक्तस्तार्क्ष्यः स इदं नामास्माकं करोत्विति ।

‘ मन्युः ( १८ ) मन्यतेः ’ क्रोधार्थस्य दीप्त्यर्थस्य वा ।

मन्युः कस्मात् उभयमप्युपपद्यते बलवत्त्वान्मध्यमस्य । तस्यैषा भवति ॥ २९[5] ॥

त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ( ऋ० सं० १० । ८४ । १ ) ॥ त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः संनद्धाः[6] कवचिन इति वा दधिक्रा व्याख्यातस्तस्यैषा भवति ॥ ३० ॥

१ घ. °भिखदेपञ्च°. २ ग. ज. चान्ये. ३ ग. ज. चाका°. ४ ख. भ. ट. ठ. ड. प्रमिश्र°. ५ क. ख. ५ (२९); ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये ( ठ. ४ ध्याये ) २९ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ६ क. ख. ६ (३०); ग. घ. ६.

त्वया मन्यो[1] सरथमारुजन्त इति[2]। तपसः पुत्रो मन्युर्नाम तस्यार्षम् ।

मन्युः

श्येनाजिरादिषु निष्केवल्ये विनियोगः ( आश्व० श्रौ० ९।८)। हे भगवन् मन्यो त्वया सरथमेकमेव त्वया सह रथं समारुह्य रुजन्तः परान् रुजन्तः[3] अभिभवन्तः हर्षमाणासः तवाश्रयाद्[4]विकला हृष्यन्तः अधृषिताः अनाधर्षिताः परैः अपि च हे मरुत्वः तिग्मेषव एते अस्मद्योधा आयुधा आयुधानि संशिश्यमानाः तीक्ष्णानभिपूणमायुधानां च योऽर्थस्तमनुतिष्ठन्तः। भिन्दन्त इषुभिश्छिन्दन्त आयुधैः। अमुना प्रकारेणैते नरा अस्मन्मनुष्या योधा अग्निरूपा अग्निकर्माणः अग्नय इवैते सेनामभिभवन्तो यन्त्विति।

'दधिक्राः' (१९) इति वक्तव्यम् । स "व्याख्यातः' ( निरु० २।२७)। 'दधत्क्रामति' इत्येवमादि सर्वं[5] मध्यमे योज्यम् । 'तस्यैषा भवति ॥ ३० ॥

**आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ( ऋ० सं० ४।३८।१० ) ॥ आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवानर्वेरणवान्संपृणक्तु नो मधुनोदकेन वचनानीमानीति मधु धमतेर्विपरीतस्य सविता सर्वस्य प्रसविता तस्यैषा[6] भवति ॥ ३१ ॥**

---

आ दधिक्राः शवसा पञ्च कृष्टीरिति[8] । वामदेवस्यार्षम् । आतनोति

दधिक्राः[7]

सर्वतस्तनोति । कोऽसाविति । दधिक्राः । केन। शवसा बलेन । किमातनोति । अपः । क । पञ्च कृष्टीः पञ्च मनुष्यजातानि प्रति । कथम । सूर्य इव ज्योतिषा ।

१ ठ. ड. मन्यो इति. २ ग. इति। त°. ३ ग. ज. भजन्तः हर्ष°; च. ठ. ड. रुजन्तः हर्ष°. ४ ग. च. ज. तवाश्रशया°. ५ क. ख. ६ (३०): ठ. °वति। इति निरुक्तटीकायामुत्तरषट्के ४ ध्याये ३० खण्डः; ड. °वति। इति निरुक्तभाष्ये ३० खण्डः. ६ क. ख. ७ ( ३१ ); त ग. ५. ७ ठ. ड. दधिक्रा इति ८ ग. °रिति। वा°.

सहस्रसाः शतसाः बहूनां बहुतराणां चोदकानां संभक्ता वाजी वेजनवान् अश्वो ईरणवान् उदकेरणक्रियायोगी । य एवमादिगुणयुक्तो दधिक्राः सोऽस्माकम् इमानि स्तुतिवाक्यानि स्तुतिलक्षणानि वचांसि संपृणक्तु मध्वा मधुना उदकेन । ' मधु धमतेः ' आद्यन्त'विपरीतस्य ' । उदकं स्तुत्यनन्तरमेव ददात्वित्यर्थः । बलकृतिर्वर्षकर्म चोभयमप्यस्ति तस्मान्मध्यमः ।

' सविता ( २० ) व्याख्यातः ' ' इममेवाग्निं सवितारमाह ' ( निरु० ७ । ३१ ) इत्यत्र । स पुनरिह वर्षकर्मयोगान्मध्यमः । तस्यैषा भवति ॥ ३१ ॥[1]

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ( ऋ० सं० १० । १४९ । १ )॥ सविता यन्त्रैः पृथिवीमरमयदनारम्भणे[2]ऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्ण इति वा त्वरमाण इति वा सविता समुदितारमिति कमन्यं मध्यमादेवमवक्ष्यदा[3]दित्योऽपि सवितोच्यते तथा च हैरण्यस्तूपे स्तुतोऽर्चन्हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच तदभिवादिन्येषर्ग्भवति ॥ ३२ ॥[4]

---

सविता यन्त्रैः[5] पृथिवीमरम्णादिति[6] । अर्चन्नामा हैरण्यस्तूप[7] ऋषिरुसराया[8]थ । सविता मध्यमः सर्वबलेशानः । किमिति । यन्त्रैः पृथिवीमरम्णात् । यावत्किंचिद्यन्त्र्यते तत्सर्वं बलेनैव । यन्त्रिता चेयं पृथिवी निश्चला । न चान्य इन्द्राद्बलवान्यन्त्रयितास्ति । तस्मादिन्द्र एवैनां संयच्छन् स्थिरामकरोत् । ' रम्णातिः संयमनकर्मा ' ( निरु० १० । ९ ) इत्युक्तम् । अथवा । वर्षे[9]णोपकारेण पृथिवीलोकनिवासिनो धारयति । तदस्याः संयमनम् । किमेतावदेव । नेत्युच्यते । अस्कम्भने सविता द्यामदृंहत् । एवमप्येतस्मिन्

१ क. ख. ७ (३१); ठ. ड °वाति । इति निरुक्तभाष्ये चतुर्थाध्या० ( ठ.४ ध्याये ) ३१ खण्डः; च. ज. वर्जमितरेष्वङ्को नास्ति. २ छ. त. °नालम्भनेऽन्त°; द. °नालम्बनेऽन्त°. ३ छ. त. द. °वक्षदा°. ४ क. ख. ८ ( ३२ ); त. द. ८. ५ ठ. ड. यन्त्रैरिति. ६ ग. °दिति । अ°. ७ ग घ. ज. आङ्गिरस ऋ°. ८ ग. घ. ज. °थ्यते. ९ घ. ट. कर्षे°; ठ. ड. कर्षणोप°.

अस्कम्भने अनारम्भणे अमूर्तेऽन्तरिक्षे यत्र पर्णमपि नालमवस्थानाय तत्रै-वमप्यतिगुर्वीं सौवर्णीं द्यां सविता एव अदंहत स्थिरामकरोत आभूतसंप्लवात्। को हि नाम मध्यमात्सवितुरन्य एतदतिदुष्करं कुर्यात् । अपि च । अश्वमिवाधुक्षत् । यथाश्वबन्धोऽश्वं धुनुयादुपावृत्तमनायासेन रजस्तस्माद-पनेष्यन्नेवं धुनिं समुद्रम् उदकबन्धितारं मेघम् अधुक्षत् सविता अधूनोत् अकम्पयत् उदकप्रक्षरणाय । क बद्धम् । अतूर्ते एतस्मिन्नन्तरिक्षे अहिं-सिते । अत्वरमाणे वा सर्वगतत्वात् । आकाशे गमनायायोग्ये वा । वाय्वात्मनैव विष्टभ्य निश्चेष्टं बद्धमिवाधुक्षद्यः सविता सोऽस्माकमिदं नाम करोत्विति । समुदिता समुद्रो मेघः ।

'कमन्यं मध्यमादेवमवक्ष्यत्' मेघमधूनोदिति । कुतः संशयः ।

अथ सविता मध्यम एव

अन्योऽपि यस्मान्मध्यमात्सवितोच्यते । यत आह । 'आदित्योऽपि सवितोच्यते' इति । यथा चैतदेवं 'तथा' एतस्मिन्नेव 'हैरण्यस्तूपे' सूक्ते स्तवः हैरण्यस्तूपमिदं सूक्तमिति । कुत एतत् । अत आह ।

इदं हैरण्यस्तूपे सूक्ते स्पष्टम्

'अर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच' इति । अर्चन्नाम्ना हिरण्यस्तूपस्तद्रूप तद्व्रतो वा । स यथैतत्सूक्तं प्रोवाच 'तदभिवादिन्येषर्भव-ति' अस्मिन्नेव सूक्ते ॥ ३२ ॥

**हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन् । एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ( ऋ० सं० १० । १४९ । ५) ॥** हिरण्यस्तूपो हिरण्मयः स्तूपो हिरण्मयः स्तूपोऽस्येति वा स्तूपः स्त्यायतेः संघातः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहं त्वष्टा व्याख्यातस्तस्यैषा भवति॥३३॥

१ क. ख. ग. च. ञ. ठ. ड. °प्लवान्. २ ग. च. ज. °दुःकरं. ३ च. °दक तारं. ४ क. ख. घ. झ. ट. ठ. ड. अधूनो°; च. अधुनाद°. ५ ग. च. ज. °वक्षन्मे°. ६ ग. ज. स्तुनः. ७ ग. ज. °न्येष ऋग्भ°; च. °न्येषा ऋग्भ°. ८ क. ख. ८ ( ३२ ); ठ. ड. °सूक्ते । इति निरुक्तभाष्ये ४ ध्याये ३२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ९ क. ख. छ. त. द. वाजे अन्ने अस्मि°. १० क. ख. ९ ( ३३ ); त. द. ९.

हिरण्यस्तूपैः[1] सवितर्यथा त्वेति[2] । हे सवितः यथा अन्यकल्पीनो[3] हिरण्यस्तूपः त्वामाजुहाव कर्मण्याहूतवान् एवम् अहमप्येतस्मिन्कल्पे हिरण्यस्तूपतामापन्नः अर्चन्नामा अवनाय वाजे अस्मिन् अन्ने संस्कृते हविषि त्वामाहूय वन्दमानः स्तुवन् सोमस्येवांशुं सोममिव क्रीत्वा आदृतः प्रति जागर्मि अनन्यमनास्त्वामायागादुपास इति । 'स्त्यै संघाते' (धा० १ । ९३५) तस्य स्तूप इति ।

सवितात्र मध्यमः

'त्वष्टा (२१) व्याख्यातः' (निरु० ८ । १३ ) । तस्यैषा भवति[4] ॥ ३३ ॥

---

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान । इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ( ऋ० सं० २।५५।१९) ॥ देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन बहुधा चेमां[5] जनयतीमानि च सर्वाणि भूतान्युदकान्यस्य महच्चास्मै देवानामसुरत्वमेकं[6] प्रज्ञावत्त्वं वानवत्त्व वापि वासुरिति प्रज्ञानामास्यत्यनर्थान्[7] अस्ताश्चास्यामर्था असुरत्वमादिलुप्तं वातो वातीति सतस्तस्यैषा भवति ॥ ३४[8] ॥

देवस्त्वष्टेति[9] । वैश्वामित्रस्य प्रजापतेरार्षम् । वैश्वदेवे विनियोगः ।

त्वष्टा

त्वष्टा देवो मध्यमः सविता सर्वस्य भूतग्रामस्य प्रसविता उत्पादयितोदकसंप्रदानद्वारेण । किमुत्पादयितैव । नेत्युच्यते । पुपोष प्रजाः पुष्णाति रसानुत्पाद्य[10] । न केवलं

१ ठ. ड. °स्तूप इति. २ ग. त्वेति[37] । हे. ३ क. ख. घ. झ. ठ. ड. °न्यकालीनो; ट. °न्यकालीनो° कल्पी. ४ क. ख. ९ ( ३३ ); ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये ३३ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ. त. द. चेमां. ६ छ. °मेकत्वं प्र°; त. द. °मे कत्वं प्र°. ७ छ. त. °मनर्था. ८ क. ख. १० ( ३४ ); त. द. १०. ९ ग. °ष्टेति[38] । वै°. १० क. ख. घ. झ. ट. ठ. ड. °ति चासानुत्पाद्य.

पुष्णाति । किं तर्हि । पुरुधा जजानेति । बहुधा चैनो[1] जनयति वर्धयति । केन पुनरसौ जनयति पुष्णाति वर्धयति च[2] । यत आह । इमा च विश्वा[3] भुवनान्यस्य । इमानि विश्वानि[4] भुवनानि उदकानि अस्य यतः स्वतायां वर्तन्ते तस्माज्जनयति पुष्णाति वर्धयति च । अतश्च सर्वमिदं शक्तः कर्तुं यतो महद्देवानाम[5]सुरत्वमेकम् । महदसुरत्वम् । असुरिति प्रज्ञानाम । तया तद्वत्त्वम् । तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति पुष्णाति

असुरत्वमित्यस्यार्थाः

वर्धयति च । अप्रज्ञो हि साधनसंपत्तावपि किं कुर्यात् । अथवा । 'प्राणवत्त्वम्' । असुः प्राणस्तेन तद्वत्त्वम् । एवमपि सति प्राणेनैव शक्यत एतत्सर्वं कर्तुम् । अप्राणो हि किं कुर्यात् । 'अन्नवत्त्वम्' इति केचित् । तेषामन्नहेतुनोदकेन तद्वत्त्वम् । तथापि योऽयम् ।

'असुरिति प्रज्ञानाम' । तत्कस्मात् । 'अस्यति अनर्थान्' । प्रज्ञैव हि प्रज्ञावतोऽस्यति क्षिपत्यनर्थानस्यति । 'अस्ताश्चास्यामर्थाः[6]' । न हि तदस्ति व्यक्तेर्यत्सर्वं[7] प्रज्ञावतां[8] प्रज्ञायां नास्ति । एतावांस्तु विशेषोऽभिव्यक्तमनभिव्यक्तमिति । अथवा । यदेतदसुरत्वं वसुमतो भावो वसुरत्वम् एतत् । रो मत्वर्थे । वकारलोपश्च । वसुना उदकेन तद्वानसौ त्वष्टा ।

वातः कस्मात्

'वातः' (२२) कस्मात् । 'वातीति सतः' । 'वा गतिगन्धनयोः' (धा० २ । ४०) इत्यस्य । सत इति धातुकारकावधारणम् । वायुशब्दो हि त्रयाणां धातूनां विकल्पेव (निरु० १० । १) । अयं तु वातेरेवेति विशेषः । 'तस्यैषा भवति' २४[9] ॥

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् (ऋ० सं० १० । १८६ । १) ॥ वात आवातु भेष-

१ ग. च. ज. चैनां; ठ. ह. चैमा. २ ग. च. ज. 'च' नास्ति. ३ घ. ट. ठ. ह. विश्वा० न्यस्य. ४ च. विश्वा विश्वानि. ५ घ. ट. ठ. ह. °देवाना० मेकम्. ६ ग. च. ज. °मनर्थाः. ७ ज. व्यक्तमनभिव्यक्तमिति°. ८ ग. 'प्रज्ञावतां' नास्ति. ९ क. ख. १० (२४); ठ. ह. °वति । इति नैरुक्तभाष्ये चतुर्थाध्याये (४ ध्याये) २४ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

**ज्यानि शंभु मयोभु च नो हृदाय प्रवर्धय[1] च न आयुरग्निर्व्याख्यातस्तस्यैषा भवति ॥ ३५ ॥[2]**

वात आवातु भेषजमिति[3] । उलस्य वातायनस्यार्षम् । वातः अस्मा-

वातः नाभिमुख्येन भेषजं यद्यत्पथ्यमस्माकं तत्तद्गृहीत्वा आवातु । तच्चास्माकं शंभु अस्तु । शमिति सुखनाम । तद्भावकमस्तु तदात्वे । आयतौ[4] च परिणामे मयोभु अस्तु । मय इति सुखनाम । हृदयाय[5] सुखमस्तु । स्तूयमानः प्रत्यक्षीभूत इव मनसि । यतः प्रत्यक्षमुच्यते[6] । प्र ण आयूंषि तारिषत् । हे भगवन् वायो प्रवर्धय त्वमस्माकमायूंषि सपुत्रपौत्रादिवर्गाणां भैषज्यं च त्वमस्माकं नित्यमावहेत्ये-[7]तदाशास्महे ।

‘ अग्निः (२३) व्याख्यातः ( निरु० ७ । १४ ) । ‘ तस्यैषा भवति ’[8] ॥ ३५ ॥

**प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । १ ) ॥ तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति कमन्यं मध्यमादेवमवक्ष्यं[9]स्तस्यैषापरा भवति ॥ ३६ ॥[10]**

---

प्रति त्यमि[11] । मेधातिथिः ऋग्द्वये । त्यं तम्[12] अङ्गवैकल्यरहितम् अध्वरं

अग्निः प्रति हे भगवन्नग्ने त्वमस्माभिः गोपीथाय सोमपानाय प्रहूयसे[13] आहूयसे । स[14] त्वमेतज्ज्ञात्वा मरुद्भिः सह आगहि आगच्छैतस्मिन्नस्मत्कर्मणि सोमं पातुमित्येतदाशास्महे ।

---

१ क. ख. ङ. थ. प. ठ. ड. प्रवर्धयतु. २ क. ख. ११ ( ३५ ); त. द. ११. ३ ग. °मिति३१ । उ°. ४ क. ख. प. झ. ट. ठ. ड. °तदात्वे च आयतौ परि°. ५ ग. ज. हृदयसुस्तूय°; च. हृदयसुख°. ६ ग. च. ज. °च्यसे. ७ ग. च. ज. °मावाहीत्ये°. ८ क. ख. ११ (३५); ठ. °वति । इति निरुक्तभाष्ये उत्तरखण्डे चतुर्थाध्याये ३५ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ९ छ, त. द. °वक्षत्त°. १० क. ख. १२ (३६); त. द. १२. ११ ग. °त्यं१० । मे°; ठ. ड. त्यमिति. १२ ग. च, ज. तमध्वरं प्र°. १३ ग. च. ज. ‘ प्रहूयसे ’ नास्ति. १४ ग. च. ज. ‘ स त्वं ’ नास्ति.

गोपीथाय मरुद्भिः सहेति मध्यमं[1] लिङ्गम् । 'तस्यैषापरा भवति '। सा पुनः किमर्थम् । गोपीथायेत्यव्यक्तं सोमपानम् । व्यक्तसोमपानलिङ्गोत्तरा । तद्यथा[2] ॥ ३६ ॥

**अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । ९ ) ॥ अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय[3] सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छेति ॥ ३७ ॥**

**दशमाध्यायस्य[4] तृतीयः पादः ॥**

---

अभि त्वा पूर्वपीतय इति[5] । हे भगवन्नग्ने[6] पूर्वकाले प्रवृत्ताय पानाय

अग्निरेव त्वाम् अभिसृजामि वदे[7] । किमिति । इदं सोम्यं मधु सोममयं तन्मधु । स त्वमागच्छेतस्मिन्[8] कर्मण्येतत्[9]पातुमित्येतदाशास्महे ॥ ३७[10] ॥

---

पञ्चदशस्य तृतीयः पादः ।

चतुर्थः पादः ।

**वेनो वेनतेः कान्तिकर्मणस्तस्यैषा भवति ॥ ३८[11] ॥**

---

१ ग. च. ज. मध्यमलिङ्ग. २ क. ख. १२ (३६); ङ. °तद्यथा । इति निरुक्तभाष्ये चतु० ३६ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ३ क. ख. १३ (३७); त. द. १३. ४ ङ. थ. ध. 'दश ०० पादः' नास्ति; त. दशमे तृती०; छ. द. तृतीयः. ५ ग. इति[41] । हे°. ६ ग. च. ज. °अग्ने त्वामभिसृ°. ७ ग. घ. ज. °वदे इदं°. ८ ग. ज. स त्वमस्मादाग°; घ. तत्त्वमस्मदाग°. ९ ग. च. ज. °र्मणि तत्पा°. १० क. ख. १३ (३७); ठ. ढ. °रमहे इति पञ्चदशस्य ( ठ. पञ्चमाध्यायस्य ) तृतीयः पादः । इति निरुक्तभाष्ये ३७ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ११ क. ख. १ (३८); त. द. १.

'वेनः' (२४) इति वक्तव्यम्। स एष 'वेनतेः कान्तिकर्मणः'।

वेनः कस्मात् — सर्वलोककान्तो हि मध्यमः सर्वस्योपकारित्वात्। 'तस्यैषा भ[1]वति' ॥ ३८ ॥

---

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति (ऋ०सं० १०। १२३। १)॥ अयं वेनश्चोदयत्पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा ज्योतिर्जरायुर्ज्योतिरस्य जरायु[2]स्थानीयं भवति जरायु[3]र्जरया गर्भस्य जरया यूयत इति वेममपां च संगमने सूर्यस्य च शिशुमिव विप्रा मतिभी रि[4]हन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा। शिशुः शंसनीयो भवति शिशीतेर्वा स्याद्दानकर्मण[6]श्चिरलब्धो गर्भो[5] भवत्यसुनीतिरसून्नयति तस्यैषा भवति ॥ ३९ ॥

अयं वेन इति। भार्गवस्य वेनस्यार्षम्। शुक्रोऽनया गृह्यते (मैत्रा० सं० १। ३। १०)। अन्तर्भावितप्रज्ञानस्तस्मिन्मनसि प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचिद्ब्रवीति अयं वेन इति।

वेनः — किं करोति। चोदयति पृश्निगर्भाः। पृश्निरादित्यः प्राष्टवर्णः। प्रकृष्टो ह्यनेन वर्णः अ[7]ष्टः आप्तः। यास्तस्य गर्भत्वमु[8]पागता रश्म्यन्तर्गताः परिपक्का आपो मासाष्टकेन संभृतास्ता वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति। किंलक्षणः। ज्योतिर्जरायुः। ज्योतिरस्य विद्युदाख्यं कर्मात्मलक्षणं जरायु[9]स्थानीयं प्रज्ञावतस्तदधिष्ठातुर्मध्यमस्य गर्भस्येव परिवेष्टनं भवति। क्वावस्थितश्चोदयति। रजसो विमाने। रज उदकं तद्यत्र

१ क. ख. १ (३८); ठ. °वति। इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये ३८ खण्डः; ड. °वति। इति निरुक्तभाष्ये ३८ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ त. थ. ध. °रायुः स्था°. ३ ङ. थ. द. °रायु जर°. ४ छ. त. द. रिहन्ति रिहन्ति लि°. ५ क. ख. छ. त. द. गर्भ इत्यसु°. ६ क. ख. २ (३९); त. द. २. ७ क. ख. ध. क्ष. ट. ठ. ड. आप्त; ट. °ष्टाप्तः° आ. ८ क. ख. ध. क्ष. ट. ठ. ड. °मुपग°. ९ च. °रायुः स्था°.

निर्मीयते तत्रावस्थितः। अन्तरिक्षलोक इत्यर्थः। योऽयमेवमादिगुणयुक्तो वेनस्तमिमं वेनम् अपां च संगमे सूर्यस्य च संगमे समागमनस्थाने यत्र सूर्यस्य रश्मिभिरापः संगच्छन्ते तत्र वर्तमानं मध्यस्थाने विप्रा मेधाविनः स्तोतारो मतिभिः स्तुतिभिः प्रज्ञापूर्विकाभिः शिशुमिव रिहन्ति। यथा शिशुर्नित्यं स्तूयत एवं स्तूयते। यदेतत् 'रिहन्ति' इति एतत् 'लिहन्ति' लिहेर्धातोः। वर्धयन्ति पूजयन्ति वेत्यर्थवचनम्।

'जरायुः' कस्मात्। तद्धि 'जरया गर्भस्य' भवति। यथा

जरायुः कस्मात् यथा गर्भो भवति तथा तथा तदुत्पद्यते। 'जरया युयत इति वा'। यच्चैतज्जरेति प्रसिद्धं प्रसूताया गोः स्त्रिया वा पश्चात्पतति सा जरेत्युच्यते तया यद्यूयते मिश्र्यते तज्जरायुरित्युच्यते।

शिशुः कस्मात् 'शिशुः' कस्मात्। स हि 'शंसनीयो भवति'। प्रयोजने वाप्रयोजने वार्चन्ति यत्किंचनप्रलापेषु। 'शिशीतेर्वा स्यात्' धातोर्दानार्थस्य। दीयते हि स पुरुषेण स्त्रियै धारणाय। भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् 'अचिरलब्धो मे गर्भः' इति।

'असुनीतिः' (२७) इत्येतद्देवतापदम्। स पुनरयमिन्द्रो मध्यमः प्राणः।

असुनीतिः कस्मात् स पुनर्यदेतस्माच्छरीरादुत्क्रामत्यथेतरान्प्राणान् 'असून्' अन्यत्र 'नयति'। विज्ञायते हि 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृहदा० उप० ४।४।२ ) इति। 'तस्यैषा भवति'॥ ३९॥

**असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः। रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ( ऋ० सं० १०।५९।५ )॥ असुनीते मनोऽस्मासु धारय चिरं जीवनाय प्रवर्धय च न आयू रन्धय च नः सूर्यस्य संदर्शनाय रध्यतिर्वशग-**

१ क. ख. ग. ज. निमीय°, ठ. ड. °तद्यन्तर्निमीय°. २ ठ. ड. मध्यमस्थाने. ३ क. ख. घ. झ. ट. ठ. ड. यथा हि शि°. ४ क. ख. घ. झ. ट. ठ. ड. °त्यर्थः। ज°. ५ ग. च. ज. 'वा' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °चिरालब्धो. ७ च. प्राणान्नेनास्मच्छरीर एव धारय मा त्वमुत्क्रमीः। त्वदन्यत्र नयति°. ८ क. ख. २ ( ३१ ); ठ. ड. °वति। इति निरुक्तभाष्ये ३१ खण्डः; ग. घ. वर्गमितरेषाङ्को नास्ति. ९ छ. त. द. मनो अस्मा°.

मनेऽपि दृश्यते। मा रधाम द्विषते सोम राजन्नित्यपि निगमो भवति । घृतेन त्वमात्मानं तन्वं वर्धयस्वेत्यो व्याख्यातस्तस्यैषा भवति ॥ ४० ॥

असुनीते[2] मनो अस्मासु धारयेति[3] । श्रुतबन्धोरार्षम् । हे असुनीते प्राण मनः अस्मासु धारय । मनःप्रभृतीनेतान् प्राणानात्मनोऽवस्थानेनास्मच्छरीर एव धारय । मा त्वमुत्क्रमीस्त्वदनुक्रमेणावस्थास्यन्त इति । जीवातवे चिरम् अस्माकं जीवनाय मनो धारय । सु प्रतिरा न आयुः । अमुना प्रकारेण सुष्ठु प्रतिर प्रकर्षेण वर्धयास्माकमायुः । किञ्च । रारन्धि नः संसाधय । अस्माकं तथानुगृहाण यथा सूर्यस्य संदृशि संदर्शनायालं स्याम । दिव्यं नः चक्षुरुत्पादय येन सम्यक्सूर्यं पश्येम । सर्वं चैतदन्नप्राचुर्ये सति भवति । यतो ब्रूमः । घृतेन त्वं तन्वं वर्धयस्व । घृतेन उदकेन त्वमात्मानं यथाकालं वर्धयस्व । त्वमुदकं ददाति सर्वमिदं भवति । अहविर्भाक्त्वादसुनीतेर्घृतमित्युदकनामेत्यत्रोपपद्यते ।

असुनीतिः

‘ रध्यतिर्वशगमनेऽपि दृश्यते ’ । तद्यथा । ‘ मा रधाम द्विषते ’ इत्यत्र । ‘ देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ’ ( ऋ० सं० १० । १२८ । ५ ) इति ॥ वैश्वदेवी । विहव्यस्यार्षम् । वैहवं सूक्तम् । तत्रैषा दर्शपूर्णमासादिषु हविषामभिमर्शने विनियुज्यते । देवीः षट् द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्चेति । ता उच्यध्वे । हे देव्यः उर्व्यः षट् सर्वमिदम् ऊर्णुवत्यो यूयमुच्यध्वे । उरु बहु यद्यद्द्रव्यं युष्माभिर्बहु क्रियमाणमिच्छामस्तत्तत् उरु बहु कुरुध्वे । हे विश्वे देवा यूयमपि इह एतस्मिन् कर्मण्यस्माकमङ्गभावमुपगताः सन्तो वीरयध्वं वीरान् पुत्रान्

रध्यतिर्वशगमनेऽस्यामृचि

१ क. ख. ३ ( ४० ) ; त. द ३. २ ठ ङ. °नीते इति. ३ ग. °येति । श्रु°. ४ ग. ध. ज. मुत्क्रमी°. ५ ग च. अ. °स्य दृशि. ६ ग. घ. ज. व. झ. षलुर्वी°. ७ ग. °णोतिति । देश्व°; च. ज. थ. झ ट. °णोतनि° । वैश्व°. ८ ग. घ. ज. बहु उरु.

इच्छत दातुम् । अपि च । जातपुत्राः सन्तः मा हास्महि प्रजया । मास्मान् प्रजा कदाचिदपि हासीत् । कष्टं हि पुत्रमरणम् । मा तनूभिर्वयं स्वाभिर्हास्महि । मास्माकमायुपश्छेदो भूत्त्वमदनुध्यानात् । अपि च । मा रधाम द्विषते सोम राजन् । हे भगवन् सोम राजन् विशेषतः त्वमुध्यसे । सर्वस्या अस्या आशिषस्त्वदनुध्यानान्मा रधाम । मा वशं गच्छेम द्विषते । द्विषन्त एवास्माकमर्थसंप्रदानादिना वश्यतामुपयान्तु यतोऽनिष्टं हि द्विषतो विधेयत्वमिति । सामर्थ्यादिह ' रध्यतिर्वशगमने '।

' ऋतः ' (१६) इत्येतत्पदम् । तदेतत् ' व्याख्यातं ' निर्वचनतः ऋतमित्युदकनाम प्रत्यृतं[1] भवति ' (नि० २।२५) इति । इह मिथेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४०[2] ॥

**ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः (ऋ० सं० ४।२३।८) ॥ ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रज्ञा वर्जनीयानि[3] हन्ति[4] ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति बधिरो बद्धश्रोत्रः कर्णौ बोधयन्दीप्यमानश्चायोरयनस्य[5] मनुष्यस्य ज्योतिषो वोदकस्य वेन्दुरिन्धेरुनत्तेर्वा तस्यैषा भवति ॥ ४१[6] ॥**

ऋतस्य हि शुरुध इति[7] । वामदेवस्यार्षम् । संपातसूक्ते निष्केवल्ये पृष्ठ्याभिप्लवयोः शस्यते (आश्व० श्रौ० ७।७) । ऋतस्य मध्यमस्य । ऋतः किमिति । शुरुधः आपः सन्ति विद्यन्ते । किंलक्षणाः । पूर्वीः अनेककालसंभृताः । यतश्चासौ इन्द्रोऽद्भिरेतैस्तस्य ऋतस्य उदकसंप्रदानद्वारेणानाकालं नाशयन्ती धीतिः

१ ग. च. ज. ठ. ङ. प्रत्यृचं २ क. ख. ३ (४८); ठ. ड °वति । इति निरुक्तभाष्ये ४८ खण्डः; ग च. वर्जमितोऽयबङ्को नास्ति. ३ त. °प्रज्ञा वर्ध (र्ज) नी°; द. °प्रज्ञावर्धनी°. ४ क. ख. छ. त. द. हन्त्यृत°. ५ छ. त द. °श्वायनस्य. ६ क. ख. ४ (४१); त द. ४. ७ ग. इति । वा°.

प्रज्ञा सर्वलोकस्य वृजिनानि वर्जनीयानि अयशांसि हन्ति नाशयति । अनाकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्वादिषु प्रवृत्तिर्भवति । ददतश्चोदकं सर्वलोकवृजिनापवर्ताय तस्य ऋतस्य[1] एवमतिमहान् श्लोकः शब्दः[2] स्तनयित्नुलक्षणो भवति यो बधिरस्यापि बद्धश्रोत्रस्य विधात्रोऽपि निसर्गतोऽपिहितश्रोत्रस्य आयोः अयनस्य मनुष्यस्य बोधयत्यस्मृत इति । कर्णौ अतिदुर्भेदौ आतृणत्ति आभिनत्ति[3] । शुचमानो दीप्यमानो ज्योतिषश्चोदकस्य च श्लोकः । एवं सततो ह्यसावृत इति ।

'इन्दुः' (२७) इत्येतत्पदम् । स कस्मात् । 'इन्धेः' दीप्त्यर्थस्य । 'उनत्तेर्वा' क्लेदनार्थस्य । उभयमपीन्दावुपपद्यते चन्द्रमसि । 'तस्यैषा भवति' ॥ ४१ ॥

इन्दुः कस्मात्

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् (ऋ० सं० १ । १२९ । ६ ) ॥ प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव य इषवानन्नवान्कामवान्वा मननानि च नो रेजयति रक्षोहा च बलेन रेजयति स्वयं सोऽस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघशंसस्ततश्चावतरं क्षुद्रमिवावस्रवेदभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति तत्परुच्छेपस्य शीलं परुच्छेप ऋषिः पर्ववच्छेपः[4] परुषि परुषि शेपोऽस्येति वेतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि तेषामेतान्यहविर्भाञ्जि वेनोऽसुनीतिरृत इन्दुः[5] प्रजापतिः प्रजानां पाता वा पालयिता वा तस्यैषा भवति ॥ ४२ ॥

१ क. ख. च. °पवाता°. २ क. ख. ४ ( ४१ ); ठ. °वति । इति नैरुक्तभाष्ये ४१ खण्डः; ड. 'वति । इति निरुक्तभाष्ये ४१ खण्डः, ग. घ. वर्गमितरेष्वङ्को नास्ति. ३ क. ख. छ. त द. सो अस्म°. ४ छ. त. द. 'पर्ववच्छेपः' नास्ति. ५ क. ख. ५ ( ४२ ); त. द. ५.

प्र तद्वोचेयमिति[1]। अतिच्छन्दाः। पारुच्छेपी। षष्ठेऽहनि मरुत्वतीये शस्यते ( आश्व० श्रौ० ८।१)। यदादिष्टं

इन्दुः

तस्येन्दोस्तत्तदहं प्रब्रवीमि अस्मै इन्दवे प्रीत्यर्थम्। किंलक्षणाः[2] यः इन्दुः। भव्यो[3] भवनार्ह आत्मवान्। अभिप्रेतानां पात्रभूत इत्यर्थः। भव्यो भावनार्ह इव। यो हविषा भावनमर्हति न च भाव्यतेऽहविर्भाक्त्वात्। हव्यो न हवनार्ह इव यो यज्ञे न च पुनराहू[4]यतेऽहविर्भाक्त्वादेव। इषवान् नित्यम् अन्नवान्। कामवान् वा। कामिनां स्तोतॄ[5]णां नित्यमभिमतफल[6]संप्रदानोन्मुखः। तत्संप्रदानोन्मुखतया च नित्यमस्माकं मन्म रेजति मननानि प्रज्ञानानि रेजयति आकम्पयति। आकम्पितहृदयान् उपकारितया नित्यमस्मान् करोति कथं नामैतं नित्यं स्तुयामेति। अपि च। रक्षोहा रक्षांसि बलेन घ्नन् सुतरामस्माकं मन्म रेजति। किंच। स्वयं सो अस्मदानिदः। स्वयमादरवान् भूत्वा स इन्दुः अस्मदानिदः अस्मदभिनिन्दितारं वज्रप्रहारैरतिदुःसहैः अजेत जयेत् क्षिपेद्वा दुर्मतिं पापमतिं योऽस्मान् प्रति। तेन वातिबलवतेन्दुना हन्यमानोऽस्मद् अघशंसः अस्माकं यः पापानां शंसिता कथयिता स्वजनानामपि स्फीतिकर्ता जनपदे असौ अवस्रवेत्। अधोगतिः स्यात्। अवतरमव क्षुद्रमिव स्रवेत्। यावच्च प्रथमं स्रुतः। अधोगतस्ततोऽवतरं ततोऽप्यवरतरमिति तावत्स्रवेत्क्षुद्रमिव द्रव्यं किंचिद्यावदामूलतो नष्टमित्येतदाशास्महे। बलकृतेर्मध्यम इति।

इहाभ्यासबाहुल्यं दृष्ट्वा 'रेजति रेजति स्रवेत् स्रवेत्' इति प्रतिसमाम्नाते 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति। शब्दाभ्यासे यत्रान्यो

अभ्यासे भूयानर्थः

विशेषो नास्ति तत्रैवं[9] विशेषमाचार्या मन्त्रार्थसत्त्वविदो मन्यन्ते 'यद्धुतार्थभूयस्त्वम्' इति। न[10] ह्यकस्मात्स एव शब्दः पुनरभ्यस्यते। लोकेऽपि चैतद् दृष्टं शब्दाभ्यासेऽ-

---

१ ग. °मिति[ऋ६]। अ°. २ ग. °क्षणाय इन्दु°. ३ ग. च. ज. भव्याय भावनार्हे°. ४ क. ख. घ. झ. ट. °राह्वय°. ५ ग. च. ज. स्तोत्रीणां. ६ ग. च. ज. °फलकामसंप्र°; ट. °फले° काम. ७ ग. च. ज. ठ. ड. श्रुतः. ८ क. घ. झ. ट. ठ. ड. °प्यवतर°. ९ क. ख. घ. झ. ट. ठ. ड. तत्रैवं. १० ग. च. ज. इति। स्रवे ( ग. ज. स्वे; च. वे )दिति प्रथमं स्रुतस्ततोऽवरं ( च. °वरतरं ) ततोऽप्यवरतरमिति तावत्स्रवेत्क्षुद्रमिव द्रव्यं किंचिद्यावदामूलतो नष्टमित्येवम् ( ग. ज. °मिति एवं )। न°.

र्थभूयस्त्वमिति 'यथाहो दर्शनीयाहो दर्शनीयेति' । गुणातिशये हि स्त्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम् । 'तत्' च पुनरेतत् 'परुच्छेपस्य' मन्त्रदृशः 'शीलम्' । स हि नित्यमभ्यस्तैः शब्दैः स्तौति । मन्त्रदृशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् । अथ पुनः 'परुच्छेपः' कस्मात् । 'परुच्छेप ऋषिः' । तस्य हि 'पर्ववत्' महान् 'शेपः' प्रजननम् । 'परुषि परुषि शेपोऽस्येति वा' । सर्वाङ्गसन्धिषु शेपैः कृतो योगसुखार्थं किल । तस्य शेपोऽस्येति वा ।

अभ्यासः परुच्छेपस्य शीलम्

परुच्छेपः कस्मात्

'इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि' । इतिकरणः प्रकारवचनः । एवमेतानि यथासमाम्नातानि सप्तविंशतिः सप्ताधिका विंशतिः । देवतानामधेयानि 'वायुः' इत्यत आरभ्य यावत् 'इन्दुः' इति । तेषां पुनः किमर्थमनुकीर्तनम् । विशेषविवक्षया । कः पुनरसाविति । तेषां कानिचित् 'सूक्तभाञ्जि हविर्भाञ्जि' च । सूक्तं च हविश्चोभयं भजन्ते । कानिचित्सूक्तमेव न हविः । 'तेषामेतान्यहविर्भाञ्जि' । तद्यथा । 'वेनोऽसुनीतिर्ऋत इन्दुः' इति । एभ्यो यान्यन्यानि त्रयोविंशतिस्तान्युभयं भजन्ते सूक्तं हविश्च । देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । घृतेन उदकेन त्वमात्मानं वर्धयस्वेत्येवमाद्यभिधानार्थं विशेषप्रविभागप्रज्ञप्तये। अहविर्भाक्त्वादुदकमत्र घृतमित्येवमादि तद्वत्तेषु मन्त्रेषु विशेष उपेक्ष्य इति । 'प्रजापतिः' (२८) प्रजानां पाता वा पालयिता वा । 'तस्यैषा भवति' ॥ ४२ ॥

एषु सप्तविंशतिदेवतानामधेयेषु कानिचित्सूक्तभाञ्जि हविर्भाञ्जि च

कानिचित्सूक्तभाञ्जि एव

प्रजापतिः कस्मात्

---

**प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्**

---

१ ग. च. ज. 'अहो' नास्ति. २ ग. च. ज. 'हि' नास्ति. ३ च. यत्. ४ क. ख. घ. झ. ट. शेपकृतो योगः सु°; च. °सन्धिशेपः कृतो योगसुखा°. ५ ग. ज. °प्रज्ञप्ताय हवि°; च. °प्रज्ञाप्तयहवि°. ६ ग. च. ज. पेक्ष्यत इ°. ७ क. ख. ५ (४२); ट. ड. °वाति । इति निरुक्तभाष्ये ४२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

( ऋ० सं० १०। १२१ । १० ) ॥ प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव[1] यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्याशीराहिर्व्याख्यातस्तस्यैषा भवति ॥ ४[2]३ ॥

---

प्रजापते न त्वदेतानीति[3] । प्राजापत्यस्य हिरण्यगर्भस्यार्षम् । पितृयज्ञ उपस्थाने विनियुक्ता ( मैत्रा० सं० १ । १० । १९ ) । राजसूये च विनियोगो होमे ( मैत्रा० सं० २ । ६ । १२ ) । हे प्रजापते न त्वदन्यो न कश्चिदपि एतानि सर्वदेवतारूपाणि परिबभूव परिगृह्य भवति । त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवति[4] । यत एव त्वां[5] वयं सर्वतो विभूतं पश्यामः[6] सर्वस्येशानमतो ब्रूमः । यत्कामास्ते येन येन युक्ताः सन्तो वयं तुभ्यं जुहुमस्तन्नो अस्तु । स कामोऽस्माकं त्वदनुध्यानात्समृध्यताम्[7] । नित्यमेव च वयं स्याम पतयो रयीणाम् । रयीणां धनानां पतयः । 'इति' इयमपरा 'आशीः' द्वितीया । यत्कामा इति प्रथमा । अथवा । 'आशीः' इत्याचार्यो दर्शयति । इयं मन्त्रगतेव यत्रापि न स्यात्तत्राप्यध्याहार्येति स्तुत्याशिषोर्नित्यसंबन्धादिति ।

प्रजापतिः

'अहिः ( २९ ) व्याख्यातो' निर्वचनतः 'अहिरयनात्' ( निरु० २ । १७ ) इति । इह त्वभिधेयो मध्यमः । 'तस्यैषा भवति' ॥ ४[8]३ ॥

अब्जामुक्थैरहिं[9] गृणीषे बुध्ने नदीनां रजःसु षीदन्[10]
( ऋ० सं० ७ । ३४ । १६ ) ॥ अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसूदकेषु सीदन्बुध्नमन्तरिक्षं बद्धा[11] अस्मिन्धृता आप[12]

१ छ त. द. जातानि परि तानि बभूव. २ क. ख. ६ ( ४३ ); त. द. ६. ३ ग. °नीति । प्रजा°; घ. ज. °नीति । प्रजा°; ठ. ड. °तान्यन्य इति. ४ ग. घ. ज. भवति. ५ ग. च. ज. त्वा. ६ ग. घ. ज. 'भूतं वयं प°. ७ ग. घ. ज. °त्समुद्यतां. ८ क. ख. ६ ( ४३ ); ठ. ड. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये ४३ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ९ छ. त. द. अप्सुजाम°. १० छ. त. द. °जःसु षद°. ११ छ. त. द बुद्धा. १२ छ. त. द. आपस्त°.

इति वेदमपीतरद् बुध्नमेतस्मादेव बद्धा अस्मिन्धृताः प्राणा इति योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात्तस्यैषा भवति[2] ॥४४॥

---

अब्जामुक्थैरिति[3] । वासिष्ठस्यार्षम्[4] । दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियोगः ( आश्व० श्रौ० ८।८ )।

**अहिः** हे स्तोतस्त्वमेतम्[5] अहिम् अप्सुजम् उदकजन्मानम् उक्थैर्गृणीषे स्तौषि बुध्ने नदीनां नदनानाम् अपां बन्धने एतस्मिन्नन्तरिक्षे वर्तमानं रजःसु सीदन् उदकेषु लब्धव्येषु निमित्तभूतेषु एतस्मिन्कर्मण्यक्रभावमुपगच्छन् ।

'बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आपः इति । इदमपीतरत्'

**बुध्नं कस्मात्** शरीरं बुध्नमित्युच्यते । 'बद्धा अस्मिन् धृताः प्राणाः इति। योऽहिः स बुध्न्यः' । एतावांस्तु विशेषः । 'बुध्नमन्तरिक्षं तन्निवासात्' अहिर्बुध्न्यः[6]

**अहिर्बुध्न्यः कस्मात्** ( ३० )। 'तस्यैषा भवति ॥ ४४ ॥

---

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ( ऋ० सं० ७ । ३४ । १७ ) ॥ मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोखा च स्रिधद्यज्ञकामस्य सुपर्णो व्याख्यातस्तस्यैषा[7] भवति ॥ ४५ ॥

---

मा नोऽहिर्बुध्न्य इति[8] । पूर्वया समानं सर्वमिति । मा अस्मान्

**अहिर्बुध्न्यः** अहिर्बुध्न्यो रिषे धात् रेषणाय हिंसनाय कस्मैचित्[9] [10] । किंच । मा यज्ञो अस्य स्रिधदृतायोः[11] । मा यज्ञोऽस्य ऋतायोः अस्य यजमानस्य यज्ञकामस्य मा स्रिधत्[12] मा सुस्रवत्[13] । नित्यमविनाशेन वर्ततामिति ।

---

१ छ. त. द. बुद्धा. २ क. ख. ७ (४४). त. द्. ७. ३ ग. °रिति । वास°. ४ ग. घ. ज. वासिष्ठस्य पराशरस्यार्षं. ५ ग. ज. °तरद्बुध्नशरी°. ६ क. ख. ७ ( ४४ ); ठ. द. °वति । इति निरुक्तभाष्ये ४४ खण्डः; ग. च. वर्जमितरेष्वङ्को[48] नास्ति. ७ क. ख. ८ ( ४५ ); त. द्. ८. ८ ग इति । पू°. ९ क. ख. घ. झ. ट ठ. धात् मा रे°. १० क. ख. व. झ ट 'चित् धात् । किं°. ११ क. ख. ग. ङ. ज. स्रिध° १२ ग. च. न. स्रिध°. १३ ग. य. न. मा विस्त (स्र?) वतु.

‘ सुपर्णो (३१) व्याख्यातः ’ ‘ सुपतनः ’ ( निरु० ३ । १२ ॥ ४ । ३ ) इति । इह त्वभिधेयो मध्यमः । ‘ तस्यैषा भवति ’ ॥ ४५ ॥

---

**एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेह्ळि स उ रेह्ळि मातरम् (ऋ० सं० १० । ११४ । ४) ॥ एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसापश्यमन्तित इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेह्ळि वागेषा माध्यमिका स उ मातरं रेह्ळि पुरूरवा बहुधा रोरूयते तस्यैषा भवति ॥ ४६ ॥**

---

एकः सुपर्ण इति । सर्वेर्मिस्य चेयमार्षम् । एक एवाद्वितीयः । यस्य

सुपर्णः — पतने गमने प्रतिमानन्यद्द्वितीयं नास्ति । स सुपर्णः सुपतनो वायुः समुद्रम् अन्तरिक्षं

निलयम् आविशति । न कदाचिदप्यनाविष्टस्तत्र । स च पुनः सर्वभूतानुप्रवेशी तदाविश्य विश्वं भुवनं सर्वाणि इमानि भूतानि अभिविपश्यति यथा द्रष्टव्यानि । तमेवं वर्तमानमहं पाकेन मनसा विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव अपश्यम् । ऋषिर्दृष्टदेवतासतत्त्वः कस्मैचिदाचक्षाणो ब्रवीति । तं माता रेह्ळि स उ रेह्ळि मातरम् । माता माध्यमिको वाक् तम् उपजीवति परस्पराश्रयत्वात्तयोर्वृत्तेरध्यात्मवदिति ।

पुरूरवाः कस्मात् — ‘ पुरूरवाः ’ (३२) मध्यमः । विज्ञायते हि ‘ प्राण एव हि पुरूरवाः ’ इति । स ‘ बहुधा रोरूयते ’ स्तनयति । तेन पुरूरवाः । ‘ तस्यैषा भवति ’ ॥ ४६ ॥

---

१ क. ख. ८ ( ४५ ); ठ. ड. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये ४५ खण्डः; ग. घ. पर्जमितरेष्वङ्को नास्ति. २ क ख. ठ. ड. रेढि; छ. त. द रेळिह. ३ क. ख. ९ (४६); त. द ९ ४ ग. इति । स°. ५ ग. च. ज. °स्यैर्गभेदे-घस्य वे°. ६ क. ख. घ. झ ट. प्रतिमायाऽन्य°. ७ ग. च. ज. °चक्ष्याणो. ८ ग. च. ज. ध. झ रेळिह. ९ ग. च अ. ‘ वाक् ’ नास्ति. १० क. ख. ९ (४६); ठ. ड. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये ४६ खण्डः; ग. घ. पर्जमितरेष्वङ्को नास्ति.

**समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः[१] स्वगूर्ताः । महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ( ऋ० सं० १० । ९५ । । ७ ) ॥ समासतास्मिञ्जायमाने ग्ना गमनादापो देवपत्न्यो वापि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयंगामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन्दस्युहत्याय च देवा देवाः ॥ ४७ ॥**

समस्मिञ्जायमान[२] इति । उर्वश्या आर्षम् । एतस्मिन् पुरूरवसि पुरूरवाः जायमाने वर्षकर्मण्यात्मानं प्रतिलभमाने प्रावृट्काले । 'कर्मजन्मान' ( निरु० ७ । ५ ) इति ह्युक्तम् । समासत ग्नाः[३] । आपः समागम्य तं परिवार्य तद्विधेयतामुपगम्य आसते तिष्ठन्ति । उत अपि च यथार्थैवम्[४]तुवशाद्वर्षासु नद आरोहन्ति तथातथैनं ता नद्यः नदना आपः स्वगूर्ताः स्वयंगामिन्यो भूत्वा सुतरां तद्विधेयतामुपगच्छन्त्यस्तदधिकारोद्भवेन ईम् एनम् वर्धयन्ति । अतः परं स्तूयमानः प्रत्यक्षीभूतः । प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे पुरूरवः यत्त्वा महे रणाय यस्मात्त्वां महते रणाय मेघेन सह रमणीयाय संग्रामाय अवर्धयन् वर्धयन्ति माध्यमिका देवाः दस्युहत्याय च[५] मेघवधाय चेति तस्मात्त्वामवश्यं ग्नाः समागम्यासते वर्धयन्ति च नद्यः । सर्वथापि महानुभावस्त्वं सर्वमेव त्वय्युपपद्यत इति ।

'देवपत्न्यो वा' इति पृथक्त्वेन दर्शयति । तथापि योज्यते । समागम्यैतस्मिञ्जाते पुरूरवसि आसत ग्नाः सर्वा देवपत्न्यः । स हि स्त्रीणां स्वभावो यत्प्रजायमानां स्त्रियं परिवार्यासते । उतेमवर्धन् । अपि चैनमवर्धयन् । नदनास्ताः स्तुतिपरास्तस्य । स्वगूर्ताः स्वयंगामिन्यः अपरैरप्रमेया ईश्वराः । अपि च । सर्वमेतदुपपद्यते पुरूरवसस्त्वयि यस्मात्तस्मान्महते रणाय

१ छ. त. द 'स्वगूर्ताः' नास्ति. २ क. ख. १० (४५); त. द १०. ३ ठ. ड. °स्मिञ्जिति. ४ ग. इति । उ°. ५ ग. ज. °ग्नाः समासतास्मिन् क्रियमाणं य आपः°. ६ ग. च. ज. °यथैतमृ°. ७ क. ख. च. झ. ट. ठ. ड 'च' नास्ति. ८ ट. °मानां स्त्रि° नं प्रि. ९ क. ख. घ. झ. ट. °ना ग्नाः स्त्री°. १० म. ज. °स्मारहयाः; च. °प्रहेयाः; ट. °रमणीयाः° हे.

रमणीयाय संग्रामाय असुरैः सह दस्युहत्याय शत्रुवधाय अवर्धयन् । त्वैर्महिमभिस्त्वं नोऽसुरान् जेष्यसीति पुरश्चक्रुर्देवा[3] इति । द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्मात्तल्लक्ष्यते समाप्तम् ॥ ४७ ॥

---

ऋज्वर्थायां निरुक्तपद्धतौ पञ्चदशोऽध्यायः समाप्तः ।

---

※ अथा[1]तोमध्यस्थानावा[2]यवायाह्यासस्त्रो[3]णास्वोनीची[4]नवारं[5]तमूष्विमा[6]रुद्राययाते[7]दिद्युज्जर[8]वोधाद[9]दर्यो[10]जातोवि[11]वृक्षानश्वो[12]पिनद्धमश्मा[13]स्यैमवतंक्षेत्रस्य[14]पतिःक्षेत्रस्य[15]पतिनाक्षेत्र[16]स्यपतेऽमी[17]वहापुनरे[18]हियो[19]अग्नि+धमपरो[20]यवासं[21]सेनवसृष्टामित्रोजना[22]न्हिरण्य[23]गर्भोयेतेस[24]रस्वोविश्वक[25]र्मासर्व×स्यविश्वक[26]र्माविमनाविश्वक[27]र्मन्हाविपात्यमू[28]पुसद्यो[29]श्चित्त्वयाम[30]न्यो[31]आदधिक्राःसविता[32]हिरण्य[33]स्तूपोदेवस्त्व[34]ष्टात्वा[35]तंआवातु[36]प्रतित्यमभित्वा[37]वेनो[38]वेनतेरथं[39]वेनोऽसुनीत[40]ऋतस्य[41]हिमतद्वो[42]चेयं प्रजापते[43]ऽन्जाभु[44]वथैमा[45]नोहिरेकःसुपर्णः[46] सप्त[47]मस्मिन्त्सप्तचत्वारिंशत् = ॥

इति निरुक्त उत्तरषट्के चतुर्थोऽध्यायः[6] ॥

---

१ क. ख. घ. झ. ट. °स्माल्लक्ष्य°; ठ. ड. °माप्तौ । अस्माल्लक्ष्य°. २ ठ. ड. 'समाप्तं' नास्ति. ३ क. ख. १० (४७); ठ. ड. °लक्ष्यते । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये ४७ खण्डः । समाप्तश्चतुर्थोऽध्यायः. ४ क. ख. घ. झ. ट. ठ. ड. इति श्री (ठ. ड. 'श्री' नास्ति) जम्बूमार्गाश्रमवा (ठ. ड. निवा) सिन आचार्यभगवद्दुर्गकृतावृज्वर्थायां निरुक्तवृत्तौ (ठ. ड. निरुक्तटीकायां निघण्टाध्यायपञ्चकेन सह नैरुक्त) पञ्च°. * छ. त द. अथातो इत्यादिका खण्डशृङ्खला नास्ति. + क. ख. घ. °निधमप°. × ट. ड. सर्वस्य कर्ता विश्व°. = ठ. ड. °शत् । इति बालबोधार्थवैदिकसं (ड. सं) प्रदायानुसारी खण्डानुक्रमणी समाप्ता; 'इति० ध्यायः' नास्ति ५ छ. इति निरुक्ते दशमोऽध्यायः; त. दशमोऽध्यायः समाप्त; द. इति दशमोऽध्यायः; ध. इति नैरुक्ते द°. ६ क. ख. ङ. °ध्यायः समाप्तः.

एकादशाध्यायस्य

प्रथमः पादः ।

ॐ[१] । श्येनो व्याख्यातस्तस्यै[२]षा भवति ॥ १ ॥

श्येनो ( निघ० ५।५।१ ) व्याख्यातः 'श्येनः शंसनीयं गच्छति' ( निरु० ४।२४ ) इति । इह त्वभिधेयो मध्यमः । तस्यैषा भवति ॥ [३] १ ॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् । अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ( ऋ० सं० ४।२६।७ ) ॥ आदाय श्येनोऽहरत्सोमं सहस्रं सवानयुतं च सह सहस्रं सहस्रसाव्यमभिप्रेत्य तत्रायुतं सोमभक्षास्तत्संबन्धेनायुतं दक्षिणा इति वा तत्र पुरन्धिरजहादमित्रानदाना[४]नीति वा । मदे सोमस्य मूरा अमूर इ[५]त्यैन्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्त ओषधिः सोमः सुनोतेर्यदेनमभिषुण्वन्ति बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन तस्य पावमानीषु निदर्शनायोदाहरिष्यामः ॥ २ ॥

आदाय श्येन इ[६]ति । वामदेवस्यार्षम् । श्येनाजिरादिषु मरुत्वतीये शस्यते ( आश्व० श्रौ० ९।७ ) । ऋत्विग्भिर्विधानतः प्र[७]त्तं श्येनः इन्द्रः सोमम्

श्येनः आदाय अभरत् अपिबत् । क । सहस्रं सवान् सहस्रं सुत्यानां यत्र कुर्वन्ति अयुतं च दक्षिणाः

प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात् । पृष्ठ्यशमनाभि[८]प्रायं वा दक्षिणादानं

१ ङ. ढ. हरिः ओम् । श्ये°; थ. °ओं ३ म् । श्ये°; छ. तुं । श्ये°; ध. हरिः॥ ॐम् ॥ श्ये°; त. द. 'ॐ' नास्ति. २ ग. ज. तुं । श्ये°; च. पुस्तके श्येन इत्यादि सोमस्य तृप्ताविवत्यन्तं नास्ति. ३ ठ. ड. इति निरुक्तोत्तरषट्कभाष्ये पञ्चमाध्याये प्रथमः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. द. °नानीति. ५ क. ख. छ. त. द. °रः । ऐन्द्रे. ६ ग. इति । वा°. ७ ग. घ. ज. ड. ढ. प्रत्तं; ट. प्रत्तं श्ये° सं. ८ ग. ज. °प्रायेण.

स्यात्सहस्रसाव्ये सत्रे तेषां तत्संबन्धात् । अत्रा पुरन्धिः अत्र अस्मिन् सहस्रसाव्ये सत्रे स श्येनः पुरन्धिः बहुनो धनस्य दाता मदे सोमस्य तृप्तौ सोमस्य प्राशयम् अजहादरातीः असुरानमित्रान् पृथक्त्वपक्षेऽप्यजयत् प्राणैर्मूढान् अप्रतिपत्तिकान् कृत्वा विषादमुपनीय अमूढो निःसाध्वसः । त्रित्वपक्षे तु 'अदानानिति वा' इति । रातिर्दानार्थः । तत्प्रतिषेधेनारातिः । प्राक्सोमपानमदप्राप्तेः अदानानिति न दास्यामीत्येवंधियो मूढमतयः कार्पण्यसंयुक्ता ये स तान् प्रति सोमस्य मदे प्राप्ते अमूढः अकृपणो भूत्वा अजहात् अत्यजत् । शतं संवेदे ।

**सहस्रसाव्यसंबन्धेन वा अयुतं दक्षिणा**

'सहस्रसाव्यमभिप्रेत्य तत्संबन्धेनायुतं दक्षिणा इति वा' । 'इति वा'-शब्देन किं विकल्प्यते । सहस्रसाव्यं वा सत्रं यत्पठन्ति याज्ञिकाः । तद्यथा । अतिरात्रयोर्मध्ये सहस्राहानि शतक्रतो दशसत्रस्याहुत्तिरग्नेः सहस्रसाव्यामात (आश्व० श्रौ० १२ । ५) । तदहां सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसंख्ययोपलक्ष्यमाणमयुतं सोमभक्षाणां संपद्यते । सोमभक्षा निष्क्रयश्रुतेश्च दक्षिणानामास्ति । "यां सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते" ( मैत्रा० सं० ४ । ८ । ३ ) इति । न चासति प्रश्ने रूढिराधेन्याय्य इति । असत्यपि दक्षिणादानसंबन्धे सहस्रसाव्यमेव सत्राणाम् ।

**अथवा अयुतशब्देन प्रासर्पिका चोत्यन्ते**

प्रासर्पिकाभिप्रायं वा अयुतम् । अथवा । सहस्रमिति

**अथवा बह्वर्थे सहस्रायुतशब्दौ**

बहुनाम । सहस्रं सत्रान् । अभिप्रवा बहवः प्रतिसवनमभिप्रवमभिप्रेत्य । यस्मिन् कस्मिंश्चिद्दक्षिणावति सोमे अयुतं च दक्षिणाः बह्वय इत्यर्थः । अस्ति हि वार्त्तिः । विशेषशब्दाः सामान्येषु भवन्तीति । तद्यथा । हिमेनोदकेनेति ( नि० ६ । ३६ ) । अदक्षिणत्वात्सत्राणामेव वेत्यभिप्रेत्य 'वा' शब्दं चकार ।

१ ग. च. ज. तृत्र°. २ ग. ज. °नानीति; क. °नानीति° नि. ३ ग. ज. कार्मण्यमिसं; च. दैर्मण्यमिसं° कार्पण्य. ४ क. ख. घ. ट. ठ. ड. °क्रयणश्रु°. ५ ग. ज. °पीवं. ६ ग. ज. निःक्रीत; इति° च. नि.क्री°; घ. ट. निक्री°. ७ क. ख. घ. ट. ठ. ड. °पि रूति मृ°; च. °पिन्दू° रूलिग.

'सोमः' (२) इति वक्तव्यम् । स पुनरेव 'ओषधिः' सोमः । हैमवतो मौजवतो वा । स कस्मात् । 'सुनोतेः' । 'षुञ् अभिषवे' (धा० ५ । १) इत्यस्य । अभिषूयते ह्यसौ यज्ञे । 'यदेनमभिषुण्वन्ति' इति कर्मकारकं दर्शयति ।

**सोमः कस्मात्**

स कथं मध्यमस्थानः[1] । भवति हि तमधिकृत्य 'यत्ते सोम दिवि ज्योतिः'[2] (मैत्रा० सं० १ । ३ । ३) इति । 'सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे तं सर्वं स्वैतनूभूतमाप्याययति[3][4]' (मैत्रा० सं० ४ । ५ । ४) इति । तस्मादस्यैवैव स्वा तनूर्यच्चन्द्रमा रसात्मकत्वात् । वायुर्वा सोमनेवमात्मानमापाद्याभिषूयत[5] इति भवति स मध्यमः ।

**स कथं मध्यमः**

'बहुलमस्य नैघण्टुकं वृत्तम्' । अस्यार्था स्तुतिः परार्था । तद्यथा । प्रायः पावमानं मण्डलम् । 'आश्चर्यमिव प्राधान्येन' । स्वप्रधाना स्तुतिः क्वचिदाश्चर्यं चित्रतः स्तुतिः स्यात् । 'तस्य पावमानीषु' ऋक्षु 'निदर्शनाय' उभयम् 'उदाहरिष्यामः' परार्थत्वं स्तुतेः स्वार्थत्वं च । परार्थं तावदुदाह्रियते । तद्यथा[6] ॥ २ ॥

**सूक्तेषु गौणवृत्त्या स स्तूयते । प्राधान्येन क्वचिदेव**

---

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः (ऋ० सं० ९ । १ । १) ॥ इति सा निगदव्याख्याताथैपापरा भवति चन्द्रमसो वैतस्य वा ॥ ३ ॥**

---

स्वादिष्ठया मदिष्ठयेति[7] । मधुच्छन्दस आर्षम् । प्रावर्त्तस्तोत्रे[8] (आश्व० श्रौ० ५ । १२) । हे सोम स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया त्वं धारया पवस्व प्रक्षर । किमर्थम् । इन्द्राय इन्द्रार्थं पातवे पानाय सुतः अभिषुतः । इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ।

**सोमः**

---

१ ग. ज. घ. ट. ठ. ड. मध्यस्था°. २ ग. च. ज. ड. दिव ज्यो°. ३ ग. च. ज. सुतनू°. ४ ग. ज. स्वतेनू°; ठ. ड. स्व तनू° च. स्वैतनू° स्वात. ५ क. ख. घ. ट. ठ. ड. साऽयमे°; ग. ज. सोममेतमा°; च. सोममेऽय°. ६ ठ. ड. °यथा । इति निरुक्तभाष्ये पञ्चमाध्याये द्वितीयः खण्डः; क. ख. ग. च. वर्गमितेरङ्को नास्ति. ७ ग. °येति । म°. ८ क. ख. घ. ट. ठ. ड. °स्तोत्रे विनियोग । हे°; च. °स्तोत्रे । हे विनियोगः.

एषापरा ऋक् चन्द्रमस एतस्य वा

‘ अथैषापरा भवति चन्द्रमसो वैतस्य वा ’ इति। ‘अथ’ शब्देन विशेषाधिकारवाचिना स्वप्रधानतां स्तुतेरधिकरोति । चन्द्रमसो वेति चन्द्रत्वमापन्नस्याप्यौषधिसोमस्य । यथोक्तं ‘ स तनूकरणे ’ ( निरु० ११ । २ )। इतरथा ह्यप्राकृतप्रक्रिया स्यादनधिकारादस्मिन् प्रक्रमे चन्द्रमसः । चन्द्रमसो वाधिदैवमापन्नस्य । औषधिसोमस्य वाधियज्ञमापन्नस्य । तदेतदुभयथा दर्शयति ॥ ३ ॥

**सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् । सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ( ऋ० सं० १० । ८५ । ३ ) ॥ सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति वृथासुतमसोममाह सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वेत्यधियज्ञमथाधिदैवतं सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति यजुःसुतमसोममाह सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चनादेव इत्यथैषापरा भवति चन्द्रमसो वैतस्य वा ॥ ४ ॥**

---

अधियज्ञे सोमः

सोमं मन्यते पपिवानिति सूर्याया आर्षम् । विवाहे विनियोगः ( आश्व० गृ० १ । ८ । १३ )। यत्संपिंषन्ति संचूर्णयन्ति अभिषुत्य पिबन्ति सोममोषधिं केचिद्रासायनिकाः । ते मन्यन्ते सोमं पपिवांसः सोममपास्म इति । न च पुनस्ते सोमपाः । वृथासोमः स इति । अनेन तावदर्धर्चेनायं मन्त्र एवं ‘ वृथासुतमसोममाह ’ पातृंश्च । अथ कः सोमः के च सोमपाः । यतो ब्रवीति । सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन । यं ब्राह्मणाः सोमं विदुः अधियज्ञे अङ्गभूतं न तस्याश्नाति कश्चन अयज्वा अनधिकृतो यजमानत्वेन । ‘ इत्यधियज्ञम् ’ इति विषयमुपप्रदर्शयति ।

१ ग. ज. ॰स्याप्योष॰. २ क. ख. घ. ट. ॰मस्य वा । य॰; च. ॰मस्य॰। य॰ वा. ३ ग. ज. औष॰. ४ क. ख. घ. ट. प्रदर्श॰; च. ॰था॰द॰ प्र; ठ. ड. प्रदर्शयति । इति निरुक्तभाष्ये पञ्चमाध्याये उत्तरषट्के तृतीयः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ५ ग. ॰निति॰ । सू॰. ६ ग. ज. किंचि॰; च. किंचि॰के. ७ क. ख. ॰पास्यमिति; घ. ट. ठ. ड. ॰पास्य इति. ८ ग. ज. इति च; च. इति चे.

‘ अथाधिदैवतम् ’ इति विषयान्तरमाधिकरोति । उक्तं हि ‘ चन्द्रमसो वा ’ ( निरु० ११ । ३ ) इति । तदुपप्रदर्शनार्थमाह । सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति ‘ यजुःसुतम् ’ अधियज्ञं चन्द्रमसमपेक्ष्य ‘ असोममाह ’ । यथा पूर्वस्मिन् रासायनिकसोमस्यासोमत्वमाधियज्ञमपेक्ष्यैवमिहाप्यधियज्ञसोमस्यासोमत्वमधिदैवसोमं चन्द्रमसमपेक्ष्य । एवं कृत्वा सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चन अदेव इति । देवानां हि भक्षत्वेन[1] विपरिणतश्चन्द्रमाः । ‘ सोमो नूनमेष तद्देवानामन्नम् ’ इति ह विज्ञायते । एवमस्य स्वप्रधाना सोमस्य[2] स्तुतिः ॥

अधिदैवते चन्द्रमाः

‘ अथैषापरा भवति चन्द्रमसो वैतस्य वा ’ । सा किमर्थम् । ‘ आश्चर्यमिव प्राधान्येन ’ इत्युक्तम् ( निरु० ११ । २ ) । तथा चेयमपरा अन्या प्राधान्यस्तुतिरप्यस्ति[3] सोमस्येत्युपप्रदर्शनार्थमाह[4] ॥ ४ ॥

**यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः । वायुः सोमस्य रक्षिता समानां मास आकृतिः ( ऋ० सं० १० । ८५ । ५ )॥**

**यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा समानां संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिश्चन्द्रमा वा चन्द्रमाश्चायन्द्रमति चन्द्रो माता चान्द्रं मानमस्येति वा चन्द्रश्चन्दतेः कान्तिकर्मणश्चन्दनमित्यप्यस्य भवति चारु द्रमति चिरं द्रमति चमेर्वा पूर्वं चारु रुचेर्विपरीतस्य तस्यैषा भवति ॥ ५ ॥**

१ क. ख. घ. ट. ठ. ड. भक्ष्यत्वे°; घ. भक्षं क्ष्य. २ ग. ज. सोमस्तु°. ३ क. ख. घ. ट. ठ. ड. °न्या स्वार्थभा°; ग. ज. प्रधानस्तु°. ४ ठ. ड. °माह । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये चतुर्थः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति.

यत्त्वा देव प्रपिबन्तीति[1] । यदा त्वां हे देव सोम प्रपिबन्ति प्रारभन्ते पातुमृत्विग्यजमानाः त्रिषु[2] सवनमुखेषु । तदा किमिति । तत आप्यायसे पुनः । ततः अनन्तरं पुनः आप्यायसे । तदुक्तमधियज्ञे " आप्यायनमाप्यायस्व[3] 'सं ते पयांसि' ( ऋ० सं० १ । ९१ । १८ ) भक्षशेषान्[4] " ( मान० श्रौ० २ । ४ । १ । ४६ ) इति ।

अस्यामपि सोमश्चन्द्रमा वा । अधियज्ञे सोमः

वायुः सोमस्य रक्षितेति । वायव्येष्वसौ पात्रेषु गृहीतो रक्ष्यत इति ' वायुमस्य रक्षितारमाह ' मन्त्रदृक् । ' साहचर्याद्रसहरणाद्वा ' । वायुसहचरितो[5] ह्यसौ । तेन नित्यं सहचरणादविनाभावात्कर्मणः । रसहरणाद्वा सर्वरसापहारी वायुः समर्थः सन्यन्न शोषयति[6] तेन सोमो रक्षितो भवति ।

वायुः कथं सोमस्य रक्षिता

समानां संवत्सराणां मासो माता निर्माता सोम ओषधिः[7] । सर्वस्य किलौषधिसोमस्य चन्द्रमसः कलोपचयमनु प्रत्यहमेकैकशेन कला इव चन्द्रमसः पर्णान्युपचीयन्ते । स पौर्णमास्यां पञ्चदशपर्णः संपद्यते । पौर्णमास्याः पुनः परतः कलाहानौ चन्द्रमस इव एकैकं पर्णमपचीयते इति ओषधेः सोमस्य चन्द्रमसः संपद्यते[8] । तदायुर्वेदविदः सोमलक्षणं रसायनतन्त्रे[9] स्मरन्ति । अमुना प्रकारेणोपचयापचयाभ्यां पर्णानां मासोपलक्षणद्वारेण[10] समानां संवत्सराणाम् आकृतिः आकर्ता भवति सोमो ' रूपविशेषैः ' । तदेवं पर्णानामुपचयापचयाभ्यामन्यदन्यद्रूपं प्रतिपद्यते । एवमधियज्ञेऽपि स एव ओषधिः सोमः ।

अथाधिदैवे । यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरित्यपरपक्षेषु पीयते रश्मिभिः । तदुक्तम् ' यमक्षितिमक्षितयः[11] पिबन्तीति ' ( निरु० ५ । ११ ) । तत आप्यायसे पुनः । तं पूर्वपक्ष आप्याययन्तीति । तदप्युक्तम् । ' यथा देवा

अधिदैवे चन्द्रमाः

१ ग. °न्तीति° । य°. २ ग च. ज. तृषु. ३ ग. ज. ट. ड 'आप्यायस्व ' नास्ति; च. यनं° सं° आप्यायस्व. ४ क. ख. घ. ट. ठ. ड. भक्ष्यशे°; ग. ज. °सीति इति भक्षशे°; घ. सीति इति भक्ष्शे° क्ष्य. ५ च. वा°युः समर्थः° युसहचरित इत्यादि सर्वं रसापहारी वेत्यन्तं. ६ क. ख. घ. ट. ठ. ड. °यति सोमं तेन; घ. °यति °तेन° सोमं. ७ घ. ट. औष°. ८ ठ. ड. °इति । स निष्पर्णोऽमावास्यायामोषधेः°. ९ ग. घ. ज. °यनं तन्त्रे. १० क. ख. घ. सोमलक्ष°; च सोमल° मासो; ट सोमल° मासोप. ११ ठ ड. क्षितम°.

अंशुमाप्याययन्तीति ' ( निरु० ५ । ११ ) । वायुं सोमस्य चन्द्रमसो रक्षितारमाह । एष ह्येनं सूक्ष्मया रश्मिनाड्या सुषुम्नाख्यया पुनर्यथाकालमापूरयति । समानां संवत्सराणां मासः । चन्द्रमाः सोमो(प?)लक्षणत्वान्मासः । द्वादशकृत्वो मासभूतमात्मानमावर्तयन् संवत्सराणां कर्ता भवति । ' रूपविशेषैः ' इति कलानामुपचयापचयविशेषाभ्यां रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ।

' स्वादिष्ठया मदिष्ठया ' इत्यस्यामपि केचिदधिदैवमर्थं व्याचक्षते ।

'स्वादिष्ठया मदिष्ठया ' इत्येतस्यामप्यृचि अधिदैवे चन्द्रमा इति केचित्

तन्मतेनोच्यते । हे भगवन् सोम चन्द्र स्वादिष्ठया अतिशयेन स्वादुतमया मदिष्ठया अतिशयेन मदयितृतमया पवस्व प्रेक्षर धारया प्रत्यहमेकैकया कलया इन्द्राय सूर्याय पातवे सुतः आपूरितः सुषुम्नेन रश्मिना ।

' चन्द्रमाः ' ( ३ ) कस्मात् । स हि ' चायन् ' पश्यन् सर्वभूतानि उपर्यवस्थितो ' द्रमति ' गच्छति । चायतेः पूर्वपदं द्रमतेरुत्तरपदम् । अथवा । ' चन्द्रो माता ' । चन्द्रश्चासौ माता च निर्माता सर्वस्येति चन्द्रमाः । चन्द्रः पूर्वपदं मातोत्तरपदम् । ' चान्द्रं मानमस्येति वा ' । तदेवोत्तरपदम् । केवलं तु समानाधिकरणः पूर्वो बहुव्रीहिरुत्तरः । अथ ' चन्द्रः '

चन्द्रमाः कस्मात्

कस्मात् । ' चन्दतेः कान्तिकर्मणः ' । नित्यकान्तो ह्यसौ । ' चन्दनमित्यप्यस्यैव ' चन्दतेः ' भवति ' । तदपि हि कान्तम् । अथवा । ' चारु द्रमति ' । चारुशब्दात्पूर्वपदं द्रमतेरुत्तरपदम् । चार्विति द्रमतिक्रियाविशेषणम् । अथवा । ' चिरं द्रमति ' । तदेवोत्तरपदं चिरशब्दात्पूर्वपदम् । ' चमेर्वा पूर्वं ' द्रमतेरेवोत्तरपदम् । कोऽर्थः । चम्यमानो भक्ष्यमाणो देवैरसौ द्रमतीति चन्द्रमाः । अथ ' चारु ' कस्मात् । ' रुचेः ' आद्यन्तविपरीतस्य ' दीप्तिकर्मणः । ' तस्यैषा भवति ' ॥ ५ ॥

चन्द्रः कस्मात् चन्दनं च

चारु कस्मात्

१ ग. घ. ज. °दैवतमर्थं°. २ ग. ज. क्षरस्व. ३ ग. ज. सुषु पश्यन् रश्मिना; च. सुषु पश्यन् १° म्नेन. ४ क. ख. घ. ट. पश्यन्. ५ क. ख. घ. ट. ठ. ड. वा चन्द्रमाः । चन्द्रः पूर्वपदं तदे ; च. वा तदे° चन्द्रमाः । चन्द्रः पूर्वपदं. ६ ठ. ड. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये पञ्चमः खण्डः; क. ख. ग. चवर्गमितो ग्रन्थो नास्ति.

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो वि दधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः ( ऋ० सं० १ । ८५ । १९ ) ॥ नवो नवो भवति जायमान इति पूर्वपक्षादिमभिप्रेत्याह्नां केतुरुषसामेत्यग्रमित्यपरपक्षान्तमभिप्रेत्यादित्यदैवतो द्वितीयः पाद इत्येके भागं देवेभ्यो विदधात्यायन्नित्यर्धमासेज्यामभिप्रेत्य प्रवर्धयते चन्द्रमा दीर्घमायुर्मृत्युमारयतीति सतो मृतं च्यावयतीति वा शतवलाक्षो मौद्गल्यस्तस्यैषा भवति ॥ ६ ॥

नवोनवो भवति जायमान इति । सूर्याया आर्षम् । दृणाश चान्द्रमसे

चन्द्रमाः: चरौ विनियोगो ( आश्व० श्रौ० ९ । ८ ).
राजयक्ष्मगृहीतेष्टौ च ( मान० श्रौ० २ । २ ।

७ ) । नवो नवो भवति जायमानः । चन्द्रमाः प्रतीच्यां दिशि पूर्वपक्षाद्युपक्रमोपक्रान्तकलारस्तं गते आदित्ये पश्चादादित्यस्य प्रतिमासं जायमानो नवो नवो भवति । [1] अह्नां केतुरुषसामेत्यपरपक्षान्तमभिप्रेत्य [1] । अपरपक्षान्तेषु प्राच्यां दिशि प्रक्षीणः कलामात्रावशेषः अह्नां केतुः लक्षणम् । तत्कलोपचयापचयाभ्यां प्रतिपत्प्रभृतीन्यहानि लक्ष्यन्ते । अथवा । अह्नां केतुः कर्ता स्वमतिविशेषैः । उषसामेत्यग्रमिति । उषसो यः प्रकाशस्तस्यान्ते पुरस्तादुद्यतः सूर्यस्य दृश्यते । स पुनरेवं पर्यायेण प्रतीचीप्राच्यौ दिशौ आयन्पूर्वपक्षापरपक्षौ विभागेन यथाविभागं देवेभ्यो विदधाति । एकैकशोऽपि पूर्वपक्षात्पौर्णमास्यमावास्ययाः स्वगत्या काले तिथिं विभज्य देवेभ्यो ददाति । विभागदाने हेतुर्भवति । [1] पूर्णे चन्द्रमस्युपचये

१ छ. त. द. ' वा ' नास्ति. २ ग. इति । मु°. ३ क. ख. घ. ट. ठ. ड 'भ्यां वि प्र'; च. 'भ्यां प्र' इ. ४ क. ख. घ. ट. ठ. ड. 'स्तस्य प्रान्तः; च 'स्तस्यैवान्ते स्य प्रा. ५ च. 'पक्षविभा' एकैकशोऽपि पूर्णमास्यमावास्ययोरागत्य काले भागं हविर्भागं वा, ट. पक्ष हविर्भागं वा विभा' एकैकश इत्यादि निरुक्तम् इत्यन्तम्; घ. ठ. ड. 'पक्षहविर्भागं वा विभा'; क. ख. पक्ष एकैकश इत्यादि निरुक्तं हविर्भागं वा विभागेन. ६ ग. ज. 'गेनाय , च. 'नायं नय'. ७ क. ख. घ. ट. ठ. ड. 'भ्यो भागं वि ; च. 'भ्यो वि° भागं. ८ ग. ज. 'वात्येककर्णे'; च. 'धात्येककर्म' त्येव; घ. ट. ठ. ड. 'धात्येककर्म'. ९ ग. च. ज. 'मास्यामा'. १० च. ति चन्द्रमाः' पूर्ण चन्द्रमस्युपचये पौर्णमास्यदर्शनेऽमावास्यमिति ह विज्ञायते । ११ एतत् रोति. १२ ग. ज. स्युपचयात्पौर्णमासीमिव मदर्शने अमावास्यामिति.

पौर्णमास्यदर्शनेऽमावास्यायाम्' (मान० श्रौ० ५ । १ । १) इति ह विज्ञायते। य एतत्करोति चन्द्रमाः स प्रतिरते प्रवर्धयते ईजानानां दीर्घमायुः । यस्मै च यजामहे तमनेन हविषा । अतः सोऽस्माकमप्येतत्करोत्विति ।

'आदित्यदैवतो द्वितीयः पाद इत्येके' । 'पूर्वापरं चरतो माययैतौ' (ऋ० सं० १० । ८५ । १८) इत्यतोऽनन्तरमेवेयम् । मैत्रायणीये समाने हविषि विनियोगः ( मैत्रा० सं० २ । २ । ७ ॥ ४ । १२ । २ ) इत्यपेक्ष्येयमपि सौर्याचान्द्रमसीत्यह्नां केतुरित्यतो विशेषलिङ्गाद्ब्रवीति 'आदित्यदैवतो द्वितीयः पादः' इति । तदर्थयोजना । यश्चन्द्रमा नवो नवो भवति जायमानो यश्च भागं देवेभ्यो विदधात्यायन् यश्च प्रतिरते दीर्घमायुः सोऽस्माकमप्येतत्करोतु । अयं पश्य सूर्योऽह्नां केतुः कर्ता उदयास्तमयाभ्याम् उषसां चाग्रमेति मुख्यत्वमागच्छति तत्कृतत्वाद्रूपस्य जन्मनः । तद्रश्मिप्रान्तप्रोत्सार्यमाणे हि तमस्युषसो जायन्ते[3] । स तासां जनयितेति मुख्यः । अतः सोऽस्माकमेतद्देवं करोत्वित्येतदाशास्महे ।

आदित्यदैवतो द्वितीयः पाद इत्येके

इह तु कथं चन्द्रमा मध्यस्थानः । ननु सूर्यात्परतः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति ( ब्रह्मपुराणं २३ । ५ ) । सत्यं स्मरन्ति । कर्मसंयोगेन तु द्युस्थानत्वे सति सर्वदेवतानां विशेषस्थाननियमो विवक्षितः । तदेतदैन्द्रं कर्म रसानुप्रदानं वृत्रवधो बलकृतिरिति । तथा बाहुल्येनेन्द्रेषु दृष्टत्वात् । बलकृतिश्च[6] चन्द्रे दृष्टा । यथा । 'वयैरेजत दुर्मतिर्म' (निरु० १० । ४२ ) । प्रसिद्धं चेदमिन्दुश्चन्द्रमा इति । रसात्मकत्वाच्चन्द्रमसो रसानुप्रदानसंबन्धः । एवं चेदिन्द्रश्चन्द्रमाः । तस्य मेघवधाधिकारसंबन्धात्कर्तृत्वेन सूर्यादर्वागिति युक्तं मध्यस्थानश्चन्द्रमाः । अपि च । ओषधिसोमश्चन्द्रमा भवत्यधिकलापः । स चन्द्रस्यात्मकम् । अन्नं चान्नादस्यास्मात्तद्वन्मध्यमा स्थानत्वेन …

चन्द्रमाः कथं मध्यस्थानः

१ ठ. ड. सर्वा ऋक् पठ्यते २ क. ख. घ. ट. ठ. ड. यश्च; …. 'रते' यश्च. ३ क. ख. घ. ट. ठ. ड. °न्तेऽतः स'; च. °न्ते स° …तः. ४ क. ख. घ. ट. ठ. ड. 'तु' नास्ति. ५ क. ख. घ. ट. ठ. ड. 'शेषतः स्था°. ६ ग. ज. °तिश्चन्द्रे; च. 'तिश्चन्द्रे' श्च. ७ ग. च. ज. तथा. ८ ग. ज. 'मिति प°; च. 'ति मति । प° ति. ९ क. ख. घ. ट. 'मन्थः कर्तृ'; …. '…' ता क.

नात् । इत्यतो युक्तं मध्यस्थान इति । यथा च सर्वगतो वायुर्विशेषतो मध्यस्थान इति । एवम् । इत्यतोऽदोषः ।

मृत्युः कस्मात्

'मृत्युः' (४) इति वक्तव्यम् । स कस्मात् । 'मारयतीति सतः' । मध्यमो हि प्राणो मृत्युः । उत्क्रामञ्छरीरादितरैः प्राणैः प्राणिनो वियोजयति । एवं मारयति । विज्ञायते हि । 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृ० उप० ४ । ४ । २ ) इति । अथवा । 'मृतं च्यावयति' । य एवोपक्षीणायुर्भवत्युपक्षीणकर्मा तमेवासावपगमनेन प्रच्यावयति । 'शतबलाक्षो मौद्गल्यः' आचार्यो मन्यते । बहुबलानि अक्षाणि इन्द्रियाणि यस्य स शतबलाक्षः बहिन्द्रियः । मुद्गलस्यापत्यं मौद्गल्यः । 'तस्य' मृत्योः 'एषा भवति' ॥ ६[1] ॥

---

**परं॑ मृत्यो॒ अनु॒ परे॑हि॒ पन्थां॒ यस्ते॒ स्व इत॑रो देव॒याना॑त् । चक्षु॑ष्मते शृण्व॒ते ते॑ ब्रवीमि मा नः॑ प्र॒जां री॑रिषो॒ मोत वी॒रान् ( ऋ० सं० १० । १८ । १ ) ॥ परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो कथितं तेन मृत्यो मृतं च्यावयते भवति मृत्यो मदेर्वा मुदेर्वा तेषामेषा भवति ॥ ७ ॥**

मृत्युः

परं मृत्यो अनु परेहि पन्थामिति[2][3] । सङ्कुसुको नाम । तस्यार्षम् । आज्यहोमः । पुत्रकामके कर्मणि स्थालीपाकविधाने षडाहुतिः ( मान० गृ० २ । १८ । २ ) । हे मृत्यो परम् अन्यम् अनुपरेहि अनुपरागच्छ त्वं पन्थानं यः ते स्वः । कतमः सः । इतरो देवयानात् । यस्माद्देवयाने पथि वयं स्थिता अनाधृष्यास्तव पितृयानं पन्थानमनुपरेहि त्वम् । अपि च । चक्षुष्मते शृण्वते च ते तुभ्यं ब्रवीमि । मा त्वमस्माकं प्रजां पुत्रान्[4] पौत्रांश्च रीरिषो हिंसीः । मा उत वीरान् अन्यानपि येऽस्मदाश्रयाः पुरुषास्तानपि मा हिंसीरिति[5] ॥ ७ ॥

---

१ ठ. ढ. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये षष्ठः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. २ ठ. ढ. मृत्यो इति. ३ ग. °मिति । स°. ४ ग. ज. पुत्रांश्च री°; च. पुत्रांश्च री° त्रान् पौत्रां°. ५ ठ. ढ. °रिति । इति ७ खण्डः; गवर्जमितरेष्वङ्को नास्ति.

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ( ऋ० सं० १ । १५५ । २ ) ॥ इति सा निगदव्याख्याता । विश्वानरो व्याख्यातस्तस्यैषा भवति ॥ ८ ॥

' विश्वानरः व्याख्यातः ' अभिधानतोऽभिधेयतश्च ( निरु० ७ । २१ ) । ' तस्यैषा भवति ' ॥ ८[2] ॥

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे । इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ( ऋ० सं० १० । ५० । १ ) ॥ प्रार्चत यूयं स्तुतिं महतेऽन्धसोऽन्नस्य दात्रे मन्दमानाय मोदमानाय स्तूयमानाय शब्दाय्यमानायेति[3] वा विश्वानराय सर्वं विभूतायेन्द्रस्य यस्य प्रीतौ सुमहद्बलं महच्च श्रवणीयं यशो नृम्णं च बलं नृमतं द्यावापृथिव्यौ वः परिचरत इति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा[4] भवति ॥९॥

———

प्र वो मह इति । वैकुण्ठस्यार्षम् । जगती । महाव्रते विनियोगः (ऐ० आ० ५ । ३ । १ ) । हे स्तोतारः प्रार्चत प्रोच्चारयत स्तुतिम् उच्चार्यमाणां चान्यैः प्रपूजयत । कस्मै । विश्वानराय । किंलक्षणाय विश्वानराय । महे महते अन्धसः अन्नस्य दात्रे मन्दमानाय हृष्यमाणाय । अथवा । शब्दाय्यमानाय स्तोतृभिः । विश्वाभुवे सर्वप्रकारविभूतियुक्ताय । इन्द्रस्य ईश्वरस्य यस्य विश्वानरस्य सुमखं

विश्वानरः

१ ठ. त्वेषमित्थेति महाराष्ट्रगुर्जरवैदिकपाठः । त्वेषमित्था० (सर्वा ऋक्पठ्यते) । इति सा निगदव्याख्याता । विश्वानरो व्याख्यातस्तस्यैषा भवति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये अष्टमः खण्डः; ड. त्वेषमित्थेति महाराष्ट्रगुर्जरवैदिकपाठः । इति सा निगदव्याख्याता ॥ ८ ॥ इति निरुक्तभाष्ये ८ खण्डः । विश्वानरो°. २ घ. ट. ज. अङ्को नास्ति. ३ क. ख छ त. द. शब्दाय्यमा°. ४ छ त. द. °वक्षत्त°. ५ ग. इति । नै°.

सहः सुमहद्बलं महि महच्च श्रवणीयं यशो बलमायतिर्महती नृम्णं च नॄन् मनुष्यान् प्रति यद्विशेषतो नतं बलं तच्च यस्य महत् । अपि चैतां वः स्तुतिं[1] यस्य विश्वानरस्य प्रोच्यमानां द्यावापृथिव्यौ परिचरतः पूजयतः अभिनन्दतः । सर्वभूतानामियमभिमता स्तुतिरस्त्वित्यभिप्रायः ।

‘ तस्यैषापरा भवति[2] ’ । सा पुनः किमर्थम् । द्युस्थानो[3]ऽपि हि विश्वानरः समाम्नातः ( निघ० ५ । ६ । १२ ) । अस्यां तु परस्यां व्यपदेशादुत्तमेन ज्योतिषा विश्वानरस्यासंशयं मध्यमत्वमित्येवमुदाह्रियते[4] ॥ ९ ॥

---

**उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ( ऋ० सं० ७ । ७६ । १ ) ॥ उदशिश्रिय[5]ज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति धाता सर्वस्य विधाता तस्यैषा भवति ॥ १० ॥**

---

उदु ज्योतिरिति[6] । वसिष्ठस्यार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १४ ) । उदश्रेत् उच्छ्रयति ऊर्ध्वमुपनयति विश्वानरो मध्यमो वायुः[7] । किम् । एतत् ज्योतिः अमृतं सूर्याख्यम् । सर्वगन्तॄणां वायुपूर्व[8]कत्वाद्गमनस्योपपद्यते । विश्वजन्यं सर्वलोकहितम् ।

स एव

एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो विश्वानरः । एवं चाभिप्रेत्योक्तं ‘ कमन्यं मध्यमादेवमवक्ष्यत् ’ ( निरु० ११ । ९ ) इति ।

ओपस्योऽर्धर्च उत्तर इति भाष्यकारो नाधिजगौ । प्रसङ्गतस्तु निर्भ्रमः । यदा तज्ज्योतिर्द्युस्थानमुन्नीयते[9] विश्वानरेणाथ तदा कथा तत्कर्मणा

---

१ ग. ज. स्तुतिमस्य; च. स्तुतिमैस्य° तिं य. २ ठ. ड. °वति । निरुक्तभाष्ये पञ्चमाध्याये नवमः खण्डः. ३ ग. ज. °स्थानेऽपि°. ४ क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ. त. द. °शिश्रय°. ६ ग. °िनि व°. ७ क. ख. घ. ट. न. र. वायुः सविता । किं°; च वायुः । किं° सविता. ८ ग. ज. °पूर्वत्वा°. ९ ग. ज. °स्थानमुद्यमुप°.

देवानां रश्मीनां चक्षुः ख्यातं[1] प्रकाशः । अजनिष्ट जायते उषाः । सा च पुनर्जाता आविरकः भुवन विश्वं सर्वमाविःकरोति भूतजातमित्यर्थः ।

धाता कस्मात्

'धाता' (६) कस्मात् । स हि 'सर्वस्य विधाता' स्रष्टा । उदकपूर्वकत्वात्सर्वविधानस्य मध्यमः । 'तस्यैषा भवति'[2] ॥ १० ॥

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं सत्यधर्मणः (अथ० सं० ७ । १७ । २ ॥ मैत्रा० सं० ४ । १२ । ६ ) ॥ धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणां वयं देवस्य धीमहि सुमतिं[3] कल्याणीं मतिं सत्यधर्मणो विधाता धात्रा व्याख्यातस्तस्यैष निपातो भवति बहुदेवतायामृचि ॥ ११ ॥

धाता

धाता ददातु दाशुष इति[4] । वामदेवस्यार्षम् । देविकासु धात्रे हविषि विनियोगः ( मैत्रा० सं० ४ । ३ । ५ ) । य एव कश्चिद्धात्रे दत्तवान् हविर्भवति तस्मै दाशुषे स ददाति । किं ददाति । प्राचीं जीवातुमक्षिताम् । प्राचीं प्रवृद्धां महतीं जीवातुं जीविकाम् अक्षिताम् अक्षीणाम् । यत एवमतो ब्रूमः । वयं देवस्य धातुः धीमहि धारयामहे सुमतिं कल्याणीं मतिं नित्यं हविर्दानयुक्तां सत्यधर्मणः[5] नित्यमवितथार्थकारिणः ।

'विधाता (७) धा । व्याख्यातः ' ( निरु० ११ । १० ) । धातैव विधाता । 'तस्यैव निपातो भवति ' स्तुतिसाधारणेन 'बहुदेवतायामृचि'[6] ॥ ११ ॥

१ क. ख. ग. ट ठ. ड. ख्यानं; च. ख्यानं° नं. २ ठ. ड. °षति । इति निरुक्तभाष्ये पञ्चमाध्याये १० खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ३ छ त. द. कल्याणीं मतिं सुमतिं. ४ इति । वा°. ५ ग. ज. सत्यम°; च. सैत्य° नि. ६ ठ. ड. °मृचि । इति निरुक्तभाष्ये पञ्चमाध्याये ११ खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति.

**सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि। तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ( ऋ० सं० १० । १६७ । ३ ) ॥ इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति कलशः कस्मात्कला अस्मिञ्छेरते मात्राः कलिश्च कलाश्च किरतेर्विकीर्णा मात्राः ॥ १२ ॥**

**इत्येकादशाध्यायस्य प्रथमः पादः ।**

सोमस्य राज्ञः इति । विश्वामित्रस्यार्षम् । सोमस्य राज्ञो धर्मणि कर्मणि यत्र

विधाता

सोम इज्यते तस्योपस्तुतौ वर्तमानस्तेन प्रसूतः सोमकलशान् अभक्षयम् । वरुणस्य चैवमेव । बृहस्पतेश्च अनुमत्याश्च शर्मणि शरणे आश्रये वर्तमानस्ताभ्यामभिप्रसूतः । तवाहमद्य मघवन् उपस्तुतौ युवयोश्च हे धातः विधातः सर्वैर्भवद्भिरनुज्ञात एतान् सोमकलशान् अभक्षयमिति ।

' कलशः कस्मात् । कला अस्मिन् शेरते मात्राः ' । कला

कलशः कस्मात्

अवयवाः सोमसमुदायात्केचित्पृथक्कृताः । ते शेरते आसते अस्मिन् । कलाशब्दात्पूर्वपदं शीङ उत्तरपदम् । अथ कलः कस्मात् । अत आह कलानिर्वचनप्रसङ्गेन । ' कलिश्च कलाश्च किरतेर्विकीर्ण मात्राः ' । ' कॄ विक्षेपे ' ( धा० ६ । १२८ )

कलाः कस्मात्

कलिश्च

इत्यस्य । कलौ वचांसि परस्परं विक्षिप्यन्ते । कला अपि विक्षिप्ता भवन्ति कुतश्चित्समुदायादिति ॥ १२ ॥

षोडशस्याध्यायस्य प्रथमः पादः ।

१ छ. त. द. °कलशः कला°. २ छ. प्रथ°; त. एकादश प्रथ°; ङ. थ ध. ठ. ड. 'इत्ये॰ पादः' नास्ति ३ ग. इति । वि° ४ क. ख. ध. व. ठ ड प्रवर्ते°; च. ॰वर्त° प्र. ५ क. ख. व. ट. ठ. ड. तवाहं हे मघवन्नद्य उप°; च. तवाह [हं हे] मघवन्नु° नु अद्य उ°. ६ क. ख. व. ट. त. ड. °धातः हे वि°; च. °धातः वि° हे. ७ ग. ज. °भक्षमि°. ८ ग. ज शयंत. ९ क. ख. व. ट. °चनानिर्वचनप्रस°; च. 'चनेगे क° नानिर्वचनप्रसङ्गे°. १० ठ. ड °दिति । इति षोडशाध्यायस्य प्रथमः पादः । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये १२ खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति.

द्वितीयः पादः ॥

**अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा तेषामेषा भवति ॥ १३ ॥**

---

'अथातो मध्यस्थाना देवगणाः'। अथातःशब्दावुक्तार्थौ। तयोः पुनरुपन्यासो बहुवचनविशिष्टोऽयमपरोऽधिकार इति। मध्यस्थाना देवगणा इतीदमपि प्रसिद्धमेव। 'तेषां मरुतः (८) प्रथमागामिनो भवन्ति'। कस्मात्। वायुरेव हि भेदेनापेक्ष्यमाणो मरुदभिधानो बहुवचनभाग् भवति। तेषां प्राथम्यं वायुना व्याख्यातम्। एतावांस्तु विशेषः। बहुसाध्ये कर्मणि बहुधा मध्यमो भवति। पृथक्त्वेन तु विज्ञाता मरुतः शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादयः सप्तसप्तका देवगणा मारुतेषु गणेषु सप्तकपालेषु। अग्नौ पुराणे चैते एव प्रसिद्धाः सप्तस्कन्धवायुविचारिणो मारीचात्कश्यपाद्दित्यां ये जज्ञिरे। नैरुक्तसमयस्तु सर्व एव गणा मरुतः। उक्तं च वार्तिके। 'मध्यमा वाक्स्त्रियः सर्वाः पुमान्सर्वश्च मध्यमः। गणाश्च सर्वे मरुतो गणभेदाः पृथक्कृताः' (बृहद्दे० ५। ४८)॥

अथ 'मरुतः' (८) कस्मात्। 'मितराविणो वा'। मितं नाम सुश्लिष्टम्। यथा तेषां योग्यं रवितुं तथा रुवन्ति स्तनयन्ति। अथवा। 'मितरोचिनः'। तथैव। सुश्लिष्टं रोचन्ते। 'अमितराविणः' इति केचिदिच्छन्ति 'मरुतोमितराविणः' इति समानसंहितत्वाद्ग्रन्थस्य तेषाम्। बहुप्रकारं च ते रुवन्तीत्यर्थः। 'मितरोचिनः' इत्यत्राप्येवमेव। 'महद्द्रवन्तीति वा'।

मरुतः कस्मात्

१ क. ख. थ. ध. महद्भ्रव°. २ क. ख. १ (१३), त. द. १ ३ ठ. ड. °गणा इति। अथा°. ४ ग. च. ज. चैव ए°. ५ क. ख. ट. ठ. ढ. सप्तधा पुत्रत्वावि°; च. सप्तस्कन्धवायुवि° धा पुत्रा°; ट. सप्तधा पुत्रेति वि° स्कन्धवायु. ६ क. ख. थ. ट. ठ ढ. °पादादित्यां; च पादित्यां° द. ७ ट. 'मध्यमा०' अस्य पाठान्तरं प्रान्ते लिख्यते 'सर्वा स्त्री मध्यमस्थाना पुमान्वायुश्च सर्वगः। गणाश्च सर्वे मरुत इति वृद्धानुशासनम्'॥ इति; इदं पाठान्तरं ठ. ड. पुस्तकयोर्मूलेऽन्तर्भाव्यते; च. पुस्तके इदं प्रान्ते लिख्यते. ८ क. ख घ. ट. ठ. ढ. अमित°. ९ ग. ज. महद्भुव°.

इह शब्दमहत्त्वाभिप्रेता । पूर्वत्र बाहुल्यं बहुप्रकारता च । तेषामेषा भवति ॥ १३ ॥[1]

**आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः । आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ( ऋ० सं० १ । ८८ । १ ) ॥ विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा रथैरायात ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा रुद्रा व्याख्यातास्तेषामेषा[2] भवति ॥ १४ ॥**

---

आ विद्युन्मद्भिरिति[3] । गोतमस्यार्षम् । आस्तारपङ्क्तिः । हे मरुतः

मरुतः

आयात यूयम् । केन कीदृशेन वा । विद्युन्मद्भिः[4] स्वर्कैः रथेभिः रंहणैर्मेघैः स्वञ्चनैः सुगमनैः । यद्वा । स्वर्चनैः शोभनमर्चनं येषां तैः । सुष्टु पूजितैः । अथवा । स्वर्चिभिः अनुपरतविद्युत्संपातैः । ऋष्टिमद्भिः रेषणवद्भिः अनाकालस्य नाशनैः । पृथक्त्वे । विद्युन्मद्भिरेव ऋष्टिमद्भिः आयुधोपेतैः । अशनपतनैः व्याप्नुवतो येऽन्तरिक्षे मेघाः पतन्ति । पृथक्त्वे । समं समेता अश्वयुग्भिरिति । अपि च । किमेवमेव यथाकथंचिदागच्छतेत्यागमनमात्रं वयमर्थिनः । नेत्युच्यते । आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः । हे सुमायाः सुकर्माणः सुप्रज्ञा वा आपतत[5] । कथम् । वर्षिष्ठया इषा अन्नेन अस्मत्प्रदेयेन संयुक्ताः । किं शनैरापतत । नेत्युच्यते । वयो न वय इव पक्षिण इव शीघ्रमापततेत्येतदाशास्महे ।

---

१ क. ख १ (१३); ठ. ड. १३ । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये १३ खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. २ क ख. १ (१४); ठ ड. २. ३ ग. °रिति" । गो ४ क. ख. घ ट. ठ. ड. °न्मद्भिः विद्योतनं विद्युत् विशिष्टदीप्तियुक्तैः स्वर्कैः; च. °न्मद्भिः स्व° विद्योतनं विद्युत् विशिष्टदीप्तियुक्तः. ५ क. ख. घ. ट. ठ. ड. आपप्तत आपतत । आगच्छतेत्यर्थः । कथम्°; ग. ञ. आपतत; च. ऊपतत् आपतत.

‘ रुद्राः ([1]) व्याख्याताः ( निरु० १० । ५ ) । तेषामेषा भवति ’ ॥ १४ ॥

---

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ( ऋ० सं० ५ । ५७ । १ ) ॥ आगच्छत रुद्रा इन्द्रेण सहजोषणाः सुविताय कर्मण इयं वोऽस्मदपि प्रतिकामयते मतिस्तृष्णज इव दिव उत्सा उदन्यवे इति तृष्णक्तृष्यतेरुदन्युरुदन्यतेऽभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा तेषामेषा भवति ॥ [3] १५ ॥

आ रुद्रास इति[4] । श्यावाश्वस्यार्षम् । जगती । आग्निमारुते शस्यते ।

रुद्राः — हे रुद्राः आगच्छत यूयम् । इन्द्रवन्तः । ‘ इदि परमैश्वर्ये ( धा० १ । ६३ ) ’ । सजोषसः परमैश्वर्येण नित्यमासेविताः । पृथक्त्वपक्षे तूपरयत एव इन्द्रेण सह प्रीयमाणा इति । हिरण्यरथाः उदकहरणार्थे रंहणाः । पृथक्त्वपक्षे तु हिरण्यविकृतरथाः । सुविताय एतस्मै[5] कर्मणे सुष्ठु सगुणाय[6] यथाशास्त्रं क्रियमाणाय प्राप्त्यर्थम् । किमिति आगच्छत । वः युष्मान् इयमस्मन्मतिः प्रतिहर्यते प्रतिकामयते । युष्माद्विनाकृतमिदं कर्म गुणवदप्येतैरङ्गैर्मा[7] भूद्विगुणमित्येवमर्थं प्रतिहर्यते । अपि च । हविः पूर्वं देवताः प्रेप्सन्ति ब्राह्मणा इवोपनिमन्त्रणम् । ततो यजमानः संस्कृते हविषि तदव्यापत्तये यागकालानतिक्रमणाय चान्नपतिरिवान्ने संस्कृते तदव्यापत्तये भोजनकालानतिक्रमणाय च देवताः प्रतिप्रेप्सति । विज्ञायते हि । ‘ देवता वै सर्वा आशंसन्ति ग्रहे गृह्यमाणे मह्यं ग्रहं गृह्णाति ’ ( मैत्रा० सं० ४ । ८ । ७ ) इति । अत इदमुक्तम् ‘ इयं वो अस्मत्प्रति हर्यते मतिः ’ इति ।

१ क. ख. २ (१४); ट. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये चतुर्दशः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. छ. त. द. न. वो अस्म°. ३ क. ख. ३ ( १५ ); त. द. ३. ४ ग. इति । श्या°. ५ ग. ज. °तस्मिन्कर्मणि, ( स्मै ) च. °तस्मिन्; कर्मणि (.णे) ६ व ट. सगणाय; ट. ह. सुगणनाय. णे . ७ ग. ज. °ङ्गान्तैर°.

कथं पुनः प्रतिहर्यते । तृष्णजे न तृष्णजे इव । तृडुपजायते यस्मिन् विशेषतः काले स तृडुपजः कालो घर्मान्तः । तस्मिन् यथा दिव उत्सा द्युलोकादुत्साः उत्सप्रभवा मेघा आपः उदन्यवे उदकमिच्छते लोकाय आगच्छन्ति प्रावृषि तथास्मन्मत्या प्रतिहर्यमाणा आगच्छतेति । उदन्युश्चातक इति केचित् । तस्य प्रेप्सतो यथा दिव उत्सा मेघा आगच्छन्ति तथास्माकमागच्छतेत्येवं तेषां योजना ।

'ऋभवः' (१०) कस्मात् । 'उरु भान्तीति वा' । ते हि बहु भान्ति दीप्यन्ते । उरुशब्दात्पूर्वपदं भातेरुत्तरपदम् । 'ऋतेन भान्तीति वा' । यज्ञेन सत्येन वा भान्ति । तदेवोत्तरपदम् । पूर्वपदे विकल्पः । 'ऋतेन भवन्तीति वा' । भवतेर्वोत्तरपदम् । ते हि ऋतेन सत्येन वा भवन्ति यज्ञेन वा भवन्ति । भूत्वा देवत्वेन सर्वे युज्यन्ते । 'तेषामेषा भवति' ॥ १५ ॥[1]

ऋभवः कस्मात्

**विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः । सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ( ऋ० सं० १ । ११० । ४ ) ॥ कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्त्यादित्यरश्मयोऽप्यृभव उच्यन्ते । अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथः । अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह भवथेत्याङ्गिरसो व्याख्यातास्तेषामेषा भवति ॥ १६ ॥**

१ क. ख. ३ ( १५ ) ठ. ढ °वति । इति निरुक्तभाष्ये पञ्चमाध्याये पञ्चदशः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ छ. त. द. वोल्हारो. ३ क. ख. छ. त द. मन्तो अमृ°. ४ क. ख. ४ ( १६ ); त. द. ४.

विष्टी शमी[1]ति। कुत्सस्येयमार्षम्। आर्भवे विनियोगः ( आश्व० श्रौ० ७। ७ )। 'विष्टी शमी' इति द्वे अपि कर्मनामनी ( निघ० २। १ )। यतोऽजामि-

ऋभवः

तार्थे[2] भाष्यकारः पूर्वं तावन्निराह 'कृत्वा' इति। किं कृत्वा। शमी कर्माणि। कथम्। तरणित्वेन क्षिप्रत्वेन क्षिप्रकारित्वेन सर्वयज्ञसंपदर्शनेन। वाघतो वोढारो यज्ञस्यानुष्ठातारो मेधाविनो वा। न ह्यमेधाविनः संवत्सरेण सकलं कर्म समापयितुं शक्ताः। ते तु संवत्सरेऽखिलं कृत्वा मर्तासः मनुष्याः सन्तः अमृतत्वम् अमृतभावं देवत्वम् आनशिरे प्राप्तवन्तः। के पुनस्ते। सौधन्वनाः सुधन्वनः पुत्राः ऋभवः सूरचक्षसः सूर्यविख्याता[3]ः सूर्यसमानदर्शनाः सूर्यसमानप्रज्ञा[4]ः वा। यत ईदृशास्तेऽतः संवत्सरे[5] समपृच्यन्त समयुज्यन्त धीतिभिः कर्मभिः। अतश्च देवा अभवन्निति।

'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' इति। आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह। 'तेषां प्रथमोत्तमाभ्याम्' ऋभुणा वाजेन च बहुवन्निगमा भवन्ति न मध्यमेन विभ्वा। स ह्यार्भवाणां मन्त्राणां स्वभावः। 'तदेतत्' उच्यते 'ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति'। तद्यथा। 'इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त' ( तै० सं० ३। १९ ) इति।

ऋभ्वादय आङ्गिरसस्य त्रयः पुत्राः। ऋभुणा वाजेन च बहुवन्निगमा भवन्ति न विभ्वना। ऋग्वेदे बहूनि सूक्तानि येषु ऋभुभिः कृतं चमसस्य चतुर्धाकरणं स्तूयते

'आदित्यरश्मयोऽप्यृभव उच्यन्ते' इत्यभिधेयव्यभिचारमुपप्रदर्शयति। क्व च पुनस्त उच्यन्ते। यतः पठति[6]। 'उद्वत्स्वस्मा अकृणो-

१ ग. °मीति। कु°. २ घ. ट. ठ. ड. °मित्यार्थे; च. °मितार्थे° त्वा. ३ ग. ज. °ख्यानाः; च. °ख्यानाः°ताः. ४ ग. ज. °मानसंज्ञा. ५ क. ख. घ. ट. ठ. ड. °त्सरे संवत्सरावयवे दसन्तादिकाले स°. ६ कं. ख. घ. ट. °ति। अगोह्यस्य यदसस्तनोति। उद्व°; च. °ति°। उद्व° अगोह्यस्य यदसस्तनोति; ठ. ड. °ति। अगोह्यस्येति। ऋक्। उद्वत्स्व°.

तेना तृणं निवत्स्वपः स्वपस्यया नरः । अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ’ ( ऋ० सं० १ । १६१ । ११ ) ॥

अस्यामृचि आदित्यरश्मय ऋभवः

दीर्घतमस आर्षम् । जगती । उद्वत्सु ये उन्नताः प्रदेशाः भुवः अद्भिरनाक्रान्तास्तेषु अस्मै लोकाय उपकरिष्यन्तो यूयमृभवः अकृणोतन प्रतिसंवत्सरं कुरुध्वे तृणं कुशादि वर्षेणादित्यमण्डलादौ वर्तमानाः । निवत्सु पुनर्निम्नेषु भुवः प्रदेशेषु अपः उदकं कुरुध्वे स्वपस्यया लोकानुग्रहप्र[2]वृत्तया वर्षक्रियया हे नरः । किंच । अगोह्यस्य योऽयम् अगोह्यः आदित्यः [3]अगूहनीयः न[4] गूहितुं शक्यः केनचिदपि अस्य यदसस्तना गृहे यावदस्य मण्डले सुप्ता इव निगूढा[5] भवथ । तदद्येदमृभवो नानुगच्छथ । हे ऋभवो यावत्तत्र निगूढा भवथ रात्रौ न तावदिह भवथ । ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः संपद्यते । एतद्वो म[6]हाभाग्यमहमनुकीर्तयामि । ते यूयमिदं नामास्माकं कुरुतेति ।

‘ अङ्गिरसो ( ११ ) व्याख्याता ’ एकवचनेन ‘ अङ्गारेष्वङ्गिराः ’ ( निरु० ३ । १७ ) इति । ‘ तेषामेषा भवति ’ ॥ १६ ॥[7]

**विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ( ऋ० सं० १० । ६२ । ५ ) ॥ बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा [8]तेऽङ्गिरसः पुत्रास्तेऽग्नेरधिज[10]ज्ञिर इत्यग्निजन्म पितरो व्याख्यातास्तेषामेषा भवति ॥ १७ ॥**

१ ग. °तनोति । दी°; ख. ट. च. ज. °तनोति । दी°. २ ग. °प्रवृत्तया; च. °प्रवर्तया न; ज. प्रवर्तया; ट. प्रवृत्तया° वर्त. ३ म. ज. गूह°; च. °गूह° अ. ४ च. निगू° न; ज. निगू. ५ ग. अ. निरूढा; च. निरूढा° गू. ६ ग. च. ज. महा°. ७ क. ख. ४ ( १६ ); ट. ह. १६ । इति निरुक्तभाष्ये पञ्चमाध्याये षोडशः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ८ क. ख. त. द. ते आङ्गि°. ९ क. ख. छ त. द. °सो अग्ने°. १० क. ख. ५ ( १७ ); त. द ५.

विरूपासः इति[1] । नाभानेदिष्ठस्यार्षम् । अनुष्टुप् । पाष्ठिके पष्ठेऽहनि विनियोगः ( आश्व० श्रौ० ८ । १ ) । विरूपाः नानारूपाः । के

अङ्गिरसः　पुनस्त इति । ऋषयः अवितथस्य ब्रह्मणो द्रष्टारः । न केवलं पश्यन्ति । अपि च । गम्भीरवेपसः अप्रमेयकर्माणः । अप्रमेयबुद्धयो वा । ऋष्यनेकत्वे कतमास्त इति । अङ्गिरसः[2] सूनवः । येऽङ्गिरसः सूनवस्त एते विवक्षिताः । कदा पुनस्ते अङ्गिरसो जज्ञिरे । अत[3] आह । ते अग्नेः परि जज्ञिरे इति । अग्नित्वमापन्नस्याङ्गिरसोऽधि[4] सकाशात्त जज्ञिरे त एते विरूपा गम्भीरवेपसश्च ममेदं नाम कुर्वन्त्विति[5] ।

'पितरो (१२) व्याख्याताः' 'द्यौर्मे पिता' ( निरु० ४ । २१ ) इत्यत्र । 'तेषामेषा भवति'[6] ॥ १७ ॥

**उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ( ऋ० सं० १० । १५ । १ ) ॥ उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसंपादिनस्तेऽसुं ये प्राणमन्वीयुरवृका[7] अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो ह्वानेषु माध्यमिको[8] यम इत्याहुस्तस्मान्माध्यमिकान् पितृन्मन्यन्तेऽङ्गिरसो व्याख्याताः पितरो व्याख्याता भृगवो व्याख्याता अथर्वाणोऽथनवन्तस्थर्वतिश्चरतिकर्मा तत्प्रतिषेधस्तेषामेषा[9] साधारणा भवति[10] ॥ १८ ॥**

उदीरतामवर इति[11] । शङ्खस्यार्षम् । पितृमेधे विनियोगः ( आश्व० श्रौ० २ । १९ ) ।

पितरः　ये तावत् अवरे पितरः पृथिवीमाश्रितास्ते तावत् उदीरताम् ऊर्ध्वं गच्छन्तु । अथ पुनर्ये परे द्युलोकमाश्रिताः तेऽप्युदीरताम् । तथा मध्यमन्यु-

१ ग. इति । ना° . २ क. ग. घ ट. त अ° . ३ ग. ज. यत° . ४ ट. सोऽधि° म्नि. ५ ग. ज. कुर्वन्त्विति; च. कुर्वन्त्विति वेत्यिव. ६ क. ख. ५ ( १७ ); ठ ड °वति । इति निरुक्तभाष्ये पञ्चमाध्याये सप्तदशः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ७ छ. त. द. °ष मृत्र्यायु° . ८ छ त. द. °ध्यमको° . ९ छ. त. द. °ध्यमा° . १० क ख. ६ ( १८ ); त. द. ६. ११ ग. इति । श° .

तिरस्तु मुच्यन्तां वा तदधिकारप्रक्षये । उन्मध्यमाः पितरो येऽपि मध्यमा मध्यस्थानाश्रयास्तेऽप्युदीरताम् उत्तमं लोकमाश्रयन्ताम् । सोम्यासः सोमसंपादिनः कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं संपादयन्ति । किंप्रकाराः । असुं य ईयुः प्राणमात्रमूर्तयः अस्थूलविग्रहाः । अवृका अनमित्राः परं साम्यमुपगताः । ऋतज्ञाः यथावत्सत्यस्य वेदितारो यज्ञस्य वा । य एवमादिगुणयुक्ताः पितरस्ते अस्माकं अवन्तु नित्यम् आगच्छन्तु हवेषु आह्वानेष्वित्येतदाशास्महे ।

पितॄणां कथं माध्यमिकत्वम्

'माध्यमिको यम इत्याहुः' नैरुक्ताः । 'तस्मात्पितॄन्माध्यमिकान्मन्यन्ते' स हि तेषां राजेति ।

अत उत्तरे 'अथर्वाणो (१३) भृगवः' (१४) इत्येते पदे समाम्नाते । न चैतयोः समस्तयोः प्रत्येकं वा स्तुतिरस्ति । अस्ति[1] तु पित्रङ्गिरोभृगुभिः साधारणा स्तुतिः । यतस्तादङ्गनिर्वचनाय प्रसङ्क्ष्य[3]माणानभिप्रेत्याथर्वशब्दनिर्वचनप्रसङ्गाद्ब्रवीति । 'अङ्गिरसो व्याख्याताः' (निरु० ३ । १७) येऽस्यामृचि वक्ष्यमाणाः । 'पितरो व्याख्याताः' (निरु० ४ । २१) । 'भृगवो व्याख्याताः' (निरु० ३ । १७) । 'अथर्वाणः' कस्मात् ।

अथर्वाणः कस्मात्

ते ह्येते 'अथनवन्तः' । किमिदमथनं येन ते तद्वन्तः । यत आह । 'थर्वतिश्चरतिकर्मा' गच्छत्यर्थः । ततः किम् । 'तत्प्रतिषेधः' । पुरस्तादकारः । न थर्वन्तीत्यथर्वाणः । स्थिरप्रकृतयो हि ते । 'तेषामेषा साधारणा भवति' अङ्गिरःप्रभृतीनाम् ॥ १८ ॥

**अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम (ऋ० सं० १० । १४ । ६) ॥ अङ्गिरसो नः पितरो नवगतयो नवनीत-**

१ ग. ज. °नो । तेषां°; च. °नो । ^ तेषां° स हि. २ ग. ज. अस्ति पितुभृग्वङ्गिरोभिः सा°; च. अस्ति ^ पि° तु. ३ क ख. घ. ट. ठ. ड °संक्षमा°; ग. ज. °संक्षमाणामभि; च. °संक्षमाणामभि° न. ४ घ. ट. °माणाः थां पि°; च. °माणाः पि° यां, ठ. ड. °मागायां पि°. ५ क. ख. ३ (१८); ट. ड. १८ खण्डः; ग. ज. वर्गमितरेष्वङ्को नास्ति.

**गतयो वाथर्वाणो भृगवः सोम्याः सोमसंपादिनस्तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानामपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति माध्यमिको देवगण इति नैरुक्ताः पितर इत्याख्यानमथाप्यृषयः स्तूयन्ते ॥ १९ ॥**

अङ्गिरसो नः पितर इति । यमस्यार्षम् । अङ्गिरसः अस्माकं सोमसंपादिनः नित्यं कल्याण्यां मतौ वर्तन्ते । पितरश्च नवग्वाः नवगतयः पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति । ' नवनीतगतयो वा ' । नवनीतं प्रति येषां मनसो गतिरिदमस्माकमिति ते नवग्वाः । विज्ञायते हि । ' स्वयं विलीनं पितॄणाम् ' ( तैत्रा० ० ३ । ६ । ७ ) इति । पितरश्चैवंलक्षणाः अथर्वाणश्च भृगवश्च य एते सोमसंपादिनः । अस्माकं कल्याण्यां मतौ वयमपि तेषां सुमतौ कल्याण्यां मतौ उपकारप्रवृत्तायां यज्ञियानां यज्ञसंपादिनां स्याम । अपि च । तेषां भद्रे भन्दनीये स्तुत्ये सौमनसे कल्याणे मनसि स्याम । 'भाजनवति वा' । येन मनसा भाजयन्त्यभिमतैरर्थैः स्तोतॄंस्तस्मिन् शोभने च संकल्पे शोभने वा अध्यवसाये स्यामेत्यर्थः ।

अथर्वाणः

' माध्यमिको देवगण इति नैरुक्ताः ' । ऋभवोऽङ्गिरसो भृगवोऽथर्वाण इति स्तुत्युपपत्तेर्देवतापदमध्ये समाम्नानादेकैकं एषां देवगण इति नैरुक्ता मन्यन्ते । ' पितर इत्याख्यानम् ' । को विशेषः । अग्न्यादिदेवतानिपर्ययस्तद्धर्मदेवताप्रकार एवायं य एते पितरो नाम । त एव ऋभुसनत्कुमारादय इत्याख्यानविदः स्मरन्ति । असावपि मन्त्राणां विषय इत्युपेक्ष्यः । अपि च । देवगणा एव उत पितरः

अथर्वादयो माध्यमिको देवगण इति नैरुक्ताः

पितर इत्याख्यानम्

१ छ. त द. कल्याण्यां मतौ सुमतौ. २ छ. त. द. °ध्यमको. ३ क. ख. ७ ( १९ ), त. द. ७. ४ ग. इति । य°; ठ. ड. न इति. ५ क. ख. घ. ट. ठ. ड. °षम् । त्रिष्टुप् । अ°; च. °षम् । ० अ° त्रिष्टुप्. ६ क. ख. घ. ट. ठ. ड. °कैकश ए°. ७ क. ख. घ ट. ठ. ड. °वतापद्धति°.

अथवा एते ऋषयः स्युर्यस्मादप्य ऋग्वेदे स्तूयन्ते

इति कुतो विचारः । ऋभवोऽङ्गिरसो भृगव इत्येवमादीनामभिधानानामृषिषु प्रसिद्धेः । ‘अथापि’ इदमपरं कारणमप्य एवैत इति यतोऽन्येऽपि ‘ऋषयो’ हि ‘स्तूयन्ते’[1] । तद्यथा । वसिष्ठाः ॥ १९ ॥

---

**सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः । वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ( ऋ० सं० ७ । ३३ । ८ ) ॥ इति[2] यथा आप्त्या आप्नोतेस्तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥**

---

सूर्यस्येव वक्षथ इति[3] । इन्द्रस्यार्षम् । यथा सूर्यस्य दीप्तिरवभासिका

अस्यामृचि वसिष्ठाः स्तूयन्ते

अर्थानाम् एवम् एषां वसिष्ठानां वक्षथो वचनस्य दीप्तिर्विदेवादिगतानामर्थानामसंदेहेनावभासिका वाच्येऽर्थे । अपि च । न केवलमेषामसंदिग्धार्थानि वचांसि गम्भीराणि च महार्थवन्ति गम्भीरार्थतया दुरवगाहानि । यत आह । समुद्रस्येव महिमा गभीरः । यथोदकमपरिमेयं समुद्रे एवमपरिमेयार्थानि । सत्यपि च महार्थत्वे नैते विलम्बितस्तुतयः । किं तर्हि । वातस्येव प्रजवः । प्रकृष्टो जव आशुप्रतिपत्तिः । तुष्टूषतां वर्णपदवाक्येषु निर्मलमनोवाग्वृत्ती शब्दार्थावसङ्गेन प्रतिपद्येते । अपि च । एवमतिमहानुभावा एते नैतेषामन्यः स्तोता वचनपदवीमनुगन्तुं शक्तः । यतो ब्रवीमि । नान्येन केनचित्स्तोत्रा हे[6] वसिष्ठाः । प्रत्यक्षीकृत्योत्तरेण पादेन ब्रवीति । एष स्तोम इयं स्तुतिर्भावत्की असंदिग्धार्था गम्भीरा विलम्बिता च नान्येनान्वेतवे नानुगन्तुमन्येन शक्या । क एतामनुकरिष्यतीति स्तुतिपरितुष्ट इन्द्रो वसिष्ठानस्तौत् ।

१ क. ख. ७ ( १९ ); ठ. ड. °सिष्ठाः । इति निरुक्तभाष्ये पञ्चमाध्याये १९ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ९. ८ ( २० ); त. द्व ८. ३ ग. इति । इ°; ठ. ड. सूर्यस्येवेति. ४ ग. च. ज. °नामेषां ५ ग. ज. °विदेवा°. ६ ग. ट. ठ. ड. वासि°. ७ ग. च. ज °भावत्की.

एवमृषयोऽपि स्तुयन्त इति प्रदर्शयत्ययमप्यस्तीति मन्त्राणां विषय इति ।

अपरे पुनः । सूर्यस्येव वक्षथः सूर्यतेजःसमानदीप्तोरस एते वासिष्ठास्तेजस्विनः समुद्रोपमगम्भीरस्वभावाश्च शीघ्रगतयश्च सर्वत्राप्रतिहतजवाः । नैतेषामन्येन गतिस्तुगन्तुं शक्येति वर्णयन्ति ।

अन्येषां मते ऋचोऽन्योऽर्थः

' आप्त्यः ' ( १५ ) अपीन्द्रसहचारिण ऋषय एकतद्वितत्रिताः । ' ते इन्द्रेण सह चेरुः ' इति विज्ञायते ( शत० ब्रा० १ । २ । ३ । २ ) । ऋग्वादयोऽप्येतस्मादेव दर्शनादपिपक्षे मध्यस्थानाः । ते कस्मात् । ' आप्नोतेः ' । आप्नुवन्ति हि ते स्तुतिभिः स्तुत्यान् । तेषामेव निपातो भवत्यैन्द्रयामृचि ' इन्द्रो यस्यां स्तूयते तस्यामृचि ॥ २० ॥[1]

आप्त्याः कस्मात्

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् । आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि ( ऋ० सं० १० । १२० । ६ ) ॥ स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामादृणाति यः शवसा बलेन सप्त दातॄनिति वा सप्त दानवानिति वा प्रसाक्षते प्रतिमानानि बहूनि साक्षतिराप्नोतिकर्मा ॥ २१ ॥[2]

एकादशाध्यायस्य द्वितीयः पादः ॥[3]

स्तुषेय्यं पुरुवर्पसमिति[4] । बृहद्दिवस्यार्षम् । महाव्रते विनियोगः ( ऐ० आ० ५ । १ । ६ ) ॥ स्तुषेय्यं स्तोतव्यम् अहं स्तौमीन्द्रम् । किंलक्षणम् । पुरुवर्पसं बहुरूपम् ऋभ्वम् उरुभूतम् इननमम् ईश्वरतमम् आप्त्यम् आप्त्यानामृषीणां स्तुति-

आख्या:

---

१ क. ख. ८ ( २० ); ठ. ड. °मृचि । इति निरुक्तभाष्ये पञ्चमाध्याये विंशतिः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. ९ ( २१ ); त. द. ९. ३ छ. द्विती°; त. इति एकादशमोध्याये द्वि°; द. एकादशमाध्या°; झ. थ. न. ठ. ढ. ' एका० पादः ' नास्ति. ४ ग. °मिति । बृ°.

भिरतिशयेन आप्तव्यम् । आदर्षते आदृणाति यः शवसा बलेन आदारयति । किम् । सप्त दानून् सप्त दातृन् मेघान् । असुरान् दानवान् । नमुचिप्रभृतीन्पृथक्त्वपक्षे । केन । शवसा बलेन । प्रसाक्षते च य आप्नोत्यभिभवति च प्रतिमानानि भूरि बहून्यपि । तदुक्तम् । 'येरेनं प्रतिमिमते नैनं तानि दम्नुवन्ति' ( निरु० ५ । १२ ) इति ।

'साक्षतिराप्नोतिकर्मा'[४] ॥ २१ ॥

षोडशस्य[५] द्वितीयः पादः ।

तृतीयः पादः ।

**अथातो मध्यस्थानाः स्त्रियस्तासामदितिः प्रथमागामिनी भवत्यदितिर्व्याख्याता तस्या एषा भवति ॥[६] २२ ॥**

---

'अथातो मध्यस्थानाः स्त्रियः' । बहुवचनविशिष्टस्य मध्यमस्य गणशोऽवस्थितस्य विभवो व्याख्यातः । लिङ्गविशिष्टस्येदानीं यथासमाम्नायमेव व्याख्यातव्यः ।

मध्यस्थानाः स्त्रियः

तदर्थं पुनर्विशेषतोऽधिकारवचनम् 'अथातः' इति । मध्यम्[७] आसां स्थानमिति 'मध्यस्थाना' इति । काः पुनस्ताः । स्त्रियः इति । वक्ष्यन्त इति शेषः । 'तासामदितिः ( १६ ) प्रथमागामिनी भवति' । सा कस्मात् । उक्तं हि 'अदीना देवमाता' ( निरु० ४ । २२ ) इति । 'तस्या एषा भवति' ॥[८] २२ ॥

१ ग. ज. सप्तदा उदकं सप्त°. २ क. ख. घ. ट. ठ. ड. °रान्वा दा°. ३ च. °न वान्° न्वा. ४ क. ख. १(२१); ठ. ड. °कर्मा । इति निरुक्तभाष्ये पञ्चमाध्याये एकविंशतिः खण्डः; ग. च. वर्जनितरेष्वङ्को नास्ति. ५ घ. ट. षोडशाध्यायस्य द्वि°; ठ. ड. इति निरुक्तभाष्ये निघण्टुपञ्चमाध्यायेन सह षोडशाध्यायस्य द्वितीयः पादः. ६ क. ख. १ (२२); त. द. १. ७ च. मध्यमा° स. ८ क. ख. १ (२२); ठ. ड. °इति । इति निरुक्तभाष्ये द्वाविंशतिः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि। अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋ० सं० १०।६४।५) दक्षस्य वादिते जन्मानि व्रते[1] कर्मणि राजानौ मित्रावरुणौ परिचरसि विवासतिः परिचर्यायां हविष्माँ आविवासतीत्याशास्तेर्वातूर्तपन्था अत्वरमाणपन्था बहुरथोऽर्यमादित्योऽरीन्नियच्छति सप्तहोता सप्तास्मै रश्मयो रसानभिसंनामयन्ति सप्तैनमृषयः स्तुवन्तीति वा विषमरूपेषु जन्मसु कर्मसूदयेष्वादित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतोऽदितिर्दाक्षायणी। अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च। तत्कथमुपपद्येत समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती अग्निरप्यदितिरुच्यते तस्यैषा भवति[2] ॥ २३ ॥

दक्षस्य वादित इति[3]। गयस्यार्षम्। वैश्वदेवे शस्यते। अहोरात्रे मित्रावरुणौ। तयोर्या सन्धिवेला तस्यां[4] प्रथममवश्यायरसानुप्रदानसंबन्धात्तां[5] मध्यमामदितिमभिप्रेत्योच्यते।

अदितिः

दक्षस्य वादिते इति। 'वा'शब्दः किमर्थः। यदा[6] आदित्यस्त्वत्तो जातस्त्वं वा आदित्यात्। सन्धिवेलानन्तरं ह्यादित्यस्योदयो जन्म। तदेवास्य व्रतं कर्म। तदुक्तम्। 'कर्मजन्मानः' (निरु० ७।५) इति। अथ तदेवं दक्षस्य जन्मनि उदये चार्धवर्तिन्यादित्ये यतो वा लब्धात्मिका त्वम् अपि अहोरात्रे उभे विवाससि परिचरसि सर्वतो व्याप्नोषि। अर्धेनाहर्व्याप्नोषि मित्रम् अर्धेन च रात्रिं वरुणम्। राजानौ सर्वलोकेश्वरौ स्वाधिकारयुक्तास्थितिकर्तव्यतासु तदधीनत्वात्प्रवृत्तेरिति। किंलक्षणो यो दक्षस्तस्य जन्मनीति। यत आह। अतूर्तपन्थाः योऽर्यमादित्यः अत्वरमाणपन्थाः अत्वरमाणः पथि वर्तते नियतगतिः प्रतिमुहूर्तं प्रत्यहं च। पुरुरथः बहुरंहणः अर्यमा अरीणां तमसां नियन्ता। सप्तहोता। सप्तास्मै रश्मयो रसानभिसंनामयन्ति। तदस्य सप्तहोतृत्वम्। 'सप्तैनमृषय आह्वयन्ति'

१ छ. त. द. कर्माणे व्रते. २ क. ख. २ (२३); त. द. २. ३ ग. इति। ग°. ४ ग. ज. तस्याः प्रथमस्यायरसा°. ५ च. ङ. °न्धातां. ६ क. ख. ग. ज. द. ह. ङ. ह. यदा दक्ष आदि°; च. यदा आदित्य° दक्ष आ.

नमन्ति स्तुवन्ति वसिष्ठाद्यास्तद्वास्य सप्तहोतृत्वम् । विषमरूपेषु जन्मसु । विषमरूपेषु । अन्यस्मिंश्चान्यस्मिंश्च नभसः प्रदेशे अयमुदेति मण्डलान्तरं हित्वा दक्षिणोत्तरायणयोः । तदस्य विषमरूपत्वं विषमजन्मता । ततो लब्धात्मिका तं वा जनयन्ती या त्वमेतौ मित्रावरुणौ परिचरसि सा त्वमिदं नामास्माकं कुरुष्वेत्येतदाशास्महे इति समस्तार्थः ।

अथवा । दक्षस्य वा । यदा दक्षस्त्वत्तो जातो व्रते च कर्मणि प्रवृत्तः

**ऋचोऽन्योऽर्थः**

स्वाधिकारयुक्तोऽयम् अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु । य एष वर्तते भगवानादित्योऽथ तदा मित्रावरुणौ विवासस्याशास्से ममैतावपि पुत्रत्वे लोकोपकारित्वेन सम्यग्वर्तेयातां यथैष दक्ष इत्यैतिहासिकपक्षे योजना ।

'विवासतिः परिचर्यायाम्' इत्यत्र निगमः । 'हविष्माँ आविवासति'।

'यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय'

**अस्यामृचि विवासतिः परिचर्यायाम्**

( ऋ० सं० १ । १२ । ९ ) ॥ मेधातिथेरार्षम् । गार्हपत्यानुगमने पूर्णाहुतिरनया हूयते ( आश्व० श्रौ० ३ । १३ ) । हे पावक अग्ने देववीतये देवयोजनाय हविष्मान् हविःसंप्रयुक्तो यस्त्वाम् आविवासति परिचरति तस्मै मृळय उपदयां रक्षां कुर्वित्येतदाशास्महे ।

'आदित्यो दक्ष इत्याहुः' देवतासतत्त्वविदः । केन दर्शनेन ।

**दक्ष आदित्यो यस्मादादित्यानां मध्ये स्तुतः**

'आदित्यमध्ये च स्तुतः' । चशब्दो हेत्वर्थः । यस्मादादित्यमध्ये स्तुतः । स्तुतिर्प्रामाणिका हि ते देवतासतत्त्वचिन्तां प्रति । कथमादित्यमध्ये स्तुत इति । 'इमा गिरः' ( ऋ० सं० २ । २७ । १ ) इत्युपक्रम्य ब्रवीति 'तुविजातो वरुणो दक्षो अंशः' ( ऋ० सं० २ । २७ । १ ) इति आदित्यमध्ये स्तुतेरादित्य एवासाविति ।

१ क. ख. घ. ट. ठ. ड. °विषुरू°; च. विषमं° ष. २ क. ख. घ. ट. ठ. ड. °न्तरं मण्डलान्तरं हि°; च. °न्तरं हि° मण्डलान्तरं. ३ क. ख. घ. ट. ठ. ड. °रथो० जन्मसु. ४ ग. ज. विषमरू°. ५ ग. यो अग्निं देववीतये० मृळय; घ. च. यो अग्निं० मृळय; ट. यो अग्निं० मृळय. ६ ज मृळय. ७ ग घ. च. ज. मृळय. ८ च. °स्तुतिर्मा° प्रा.

यद्येवं नन्विदमपरं विरुध्यते यदैतिहासिका आहुः 'अदितिर्दाक्षायणी' इति । उभयमपि चैतन्निगमे श्रूयत आदित्यो दक्षो दाक्षायण्यदितिरिति । तद्यथा[3] । 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परि[4] । भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त' ( ऋ० सं० १० । ७२ । ४ ) ॥ अदितेर्दाक्षायण्या आर्षम् । उत्तानपाद्राजा कश्चिद्यः पुराणेऽपि स्मर्यते । ततस्तावद्भूर्नाम कश्चिज्जज्ञे । ततोऽपि भुव आशा दिशः अजायन्त । किमजनन्मभावमसौ कथमपि बिभर्ति देवताजन्मप्रतिक्रियया वा । अदितेर्दक्षो अजायत प्रादुर्बभूव । दक्षाच्चै परि अधि सकाशात् अदितिः प्रादुर्बभूव ।

अदितेर्दक्षोऽजायत दक्षाच्चादितिरिति कथमुपपद्येत

'तत्' इतरेतरविरुद्धं 'कथमुपपद्येत' । यतः प्रतिसमाधानं ब्रवीति । 'समानजन्मानौ स्याताम् इति' । समनन्तरजन्मानौ समानजन्मानौ यथोपवर्णितं मन्त्रे । 'दक्षस्य वादिते' इत्यत्र । 'अपि वा देवधर्मेण' । महदात्मनादितिमपेक्ष्य तस्याः कारणत्वं च कार्यत्वं च दक्षस्य । अथवा । महदात्मना दक्षमपेक्ष्यादितेः कार्यत्वम् । एवं कृत्वोक्तम् 'इतरेतरजन्मानावितरेतरप्रकृती[6]' इति ।

अधुना व्यभिचारं दर्शयति । 'अग्निरप्यदितिरुच्यते' इति । 'तस्य' अग्नेरदितिशब्दवाच्यत्वे 'एषा भवति' ॥ २३ ॥

**यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता । यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ( ऋ० सं० १ । ९४ । १५ ) ॥ यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधत्वमदिते सर्वासु कर्मततिष्वाग आङ्पूर्वाद्गमेरेन एतः किल्बिषं किल्भिदं सुकृतकर्मणो[10] भयं कीर्तिमस्य भिनत्तीति वा यं भद्रेण**

१ ग. ज. तद्. २ क. ख घ. ट. चैतास्मिन्नि° ३ च. °था । अदितेर्दाक्षा० अदितेर्दक्ष इत्यादि; ठ. ड. 'भूर्जज्ञ' इति पूर्वार्धं यथा संहितायाम्. ४ ग. परि ॥ भूः. ५ ग. ज. दक्षाद्दुपरि°. ६ ग. च. ज. °कृती त इति ७ क. ख. २ ( २३ ); ठ ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये त्रयोविंशतिः खण्डः; ग. च. इत्यधिकरत्रयं नास्ति. ८ ठ. त. द. °दशाना°; क. ददस्यना°. ९ ठ. त. द. °तावि°. १० छ. °कर्मणो°.

**शवसा बलेन चोदयसि प्रजावता च राधसा धनेन ते वयमिह स्यामेति सरमा सरणात्तस्या एषा भवति ॥ २४ ॥**

यस्मै त्वं सुद्रविण इति । कुत्सस्यार्षम् । प्रातरनुवाके विनियोगः

अस्यामृचि अग्निरदितिः

( आश्व० श्रौ० ४ । १३ ) । हे सुद्रविणः सुधन अदिते अग्ने यस्मै त्वं ददाशः ददासि । किमिति । अनागास्त्वम् अनपराधत्वं सर्वताता सर्वासु कर्मततिषु इष्टिपशुसोमलक्षणासु अवैगुण्यं करोषि । यं भद्रेण शवसा बलेन स्वजात्यविरोधिना प्रजावता च राधसा प्रजासंयुक्तेन च धनेन त्वं चोदयसि अनुगृह्णासि । ते वयमेवानुगृह्यास्तव स्यामेत्येतदाशास्महे ।

' आगः आङ्पूर्वाद्गमेः ' । अवश्यमेवैतदागच्छति कर्तारमित्यागः । प्रसङ्गादाह । ' एन एतेः ' । तदप्येवमेवावश्यमेवैति । यदेतत् ' किल्बिषम् ' एतत् ' कीर्तिं भिनत्ति ' ।

' सरमा ' ( १७ ) देवशुनीत्यैतिहासिकपक्षेण । माध्यमिका वाङ्नैरुक्तपक्षेण । सा कस्मात् । ' सरणात् ' गमनात् । ' तस्या एषा भवति ' ॥ २४ ॥

सरमा कस्मात्

**किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः । कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ( ऋ० सं० १० । १०८ । १ ) ॥ किमिच्छन्ती सरमेदं प्रानड् दूरे ह्यध्वा जगुरिर्जङ्गम्यतेः पराञ्चैरञ्चितः का तेऽस्मास्वर्थहितिरासीत्किं परितकनं परितक्म्या रात्रिः परित एनां तक्म तक्मेत्युष्णनाम इति सतः कथं रसाया अतरः पयांसीति रसा नदी रसतेः शब्दकर्मणः कथंरसानि तान्युदकानीति वा**

---

१ छ. त. द °धसा ते. २ क. ख. ३ ( २४ ); त. द. ३. ३ ग. इति । कु°; ठ. ड. यस्मै त्वामनि. ४ क. ख. घ. ट. ठ. ड. यं च भ°. ५ ग. ज. यं चो°; च. °न चो°त्वं. ६ ग. ज. तदे°; च. तदे° य. ७ क. ख. २ ( २४ ); ठ. ड. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये २४ खण्ड; ग. च. वर्जमितरेष्वङ्को नास्ति. ८ छ. पापङ्; त. द. शापत्.

**देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानं सरस्वती व्याख्याता तस्या एषा भवति ॥ २५ ॥**

---

किमिच्छन्तीति[3] । देवपणयः किलासुराः देवगास्तिरपजह्रुः । ततः किलेन्द्रस्तदन्वेषणाय तदालयं सरमां प्राहिणोत् । तां च देवशुनीमवरतां दृष्ट्वा पप्रच्छुरनयर्चा 'किमिच्छन्ती सरमा' इति । इदमस्मन्निवासस्थानं सरमा किमिच्छन्ती किमस्मत्तः प्रार्थयन्ती प्रानट् प्राप्तवती कदाचिदप्यनागतपूर्वेति । अपि च । दूरे ह्यध्वा । महदेतदध्वानं न यदृच्छया शक्यमागन्तुम् । य एव जगुरिः स्यात् भृशं गन्ता स एव शक्त आगन्तुम् । पराचैः पराञ्चनैरचितः पराङ्मुखैः अञ्चनैर्गमनैः अचितो गतो विप्रकृष्टो देवनिवासात् । यतो ब्रूमः । हे सरमे कास्मेहितिः । का तव अस्मास्वर्थहितिः अर्थस्य[4] धानम । कोऽस्मत्तोऽर्थस्तव प्राप्तव्योऽभिप्रेत आसीद्येनायमतिमहानध्वा व्यवसित आगन्तुम् । कथं परितक्म्यातीत्[6] । किं परितक्म्यम् । अपि सुखा रात्रिः अन्तरा तत्रासीत् । परितक्म्या रात्रिः । 'तक्मेत्युष्णनाम' तकतेर्गत्यर्थस्य । सर्वतो हि तक्मं भवति । तदेनामुभयतः परिगृह्य वर्तते इति परितक्म्या रात्रिः । अपि च । कथं रसाया अतरः पयांसि । रसा नाम नदी अत्यर्थयोजनविस्तारा । तस्याः पयांस्यतिदुस्तराणि कथमतरः कथं तीर्णवत्यसि । अथवा । कथं रसानि तान्युदकानि । अपि नाम स्वादूनि । अपि श्रान्तायास्तवान्तरा वासाः केष्वासन्निति ।

सरमा

'देवशुनीन्द्रेण प्रहिता' इति निदानप्रख्यापनं मन्त्रार्थाभिव्यक्तये । समूदे संवादं कृतवतीत्यर्थः । इत्याख्यानविद एवं मन्यन्ते ।

वाक्पक्षे तु चिरकालेनावृष्ट्युपरमे कदाचिदभिनवमेघस्य सहसैव स्तनयित्नुमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामभूर्तामिव ब्रवीति 'किमिच्छन्ती सरमा' इति । इदमस्मच्छेत्रं चिरमनागम्य

वाक्पक्षे ऋचोऽर्थः

१ छ. रमूं मु १ क. ख. ४ (७५), ट. ड. २४. ३ ग. °न्तीति । दे°. ४ क. ख. घ. ट. ठ. ड. °स्य मित्रा°. ५ क. ख. घ. ट. ठ. ड. अपि च । का°; च. ० का° अपि च. ६ च. °तक्म्या° क्या. ७ क. ख. घ. ट. ठ. ड. अपि नाम सु°; च अपि ० सु° नाम. ८ क. ख. घ. ट. ठ. ड. अन्तरा; च. अन्त° च. ९ च. °तरमा.

सरमा माध्यमिका वाक् किमिच्छन्ती प्रानट् प्राप्तवती । अपि च । दूरं ह्यध्वा । चिरकालश्चेयमस्माभिः । जगुरिः भृशं यो गन्ता स्यात्सा चिरविच्छिन्नमेतद्वर्त्म पुनरागच्छेत् । पतनुयात्संरचैः पैर ङ्गमुखैः एतदचिन्त्यम् । चिरनष्टमित्यर्थः । अपि च । क स्मेहितिः । किमस्मांस्वर्थाभिधानमासीत्पूर्वं तव हे सरमे येनागमः । किं वा न जातं येनापुनरागमः । अपि च । चिरप्रोषितायास्तव किं परितक्मनमासीत् । अन्तरिक्षनद्या अपि महत्या रसायाः कथमतरः पयांसि । कथमतिबहून्युदकानि संक्षोभ्यात्मानं प्रतिलब्धवत्यसि । 'वाग्वै सरमा' ( मैत्रा० सं० ४ । ६ । ४ ) इति हि विज्ञायते । सरस्वती ( १८ ) व्याख्याता नदीवत् ( निरु० २ । २३ ) इति । 'तद्देवतावत्' इत्युक्तमिदं तत् । 'तस्या एषा भवति' ॥ २५ ॥

---

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ( ऋ० सं० १ । ३ । १० ) ॥ पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुस्तस्या एषापरा भवति ॥ २६ ॥**

पावका नः सरस्वतीति । मधुच्छन्दस आर्षम् । प्रउग विनियोगः सरस्वती ( आश्व० श्रौ० २ । ८ ) । सारस्वते हविषि च ( मैत्रा० सं० २ । १ । ७ ॥ २ । ५ । २ ॥ २ । ५ । ४ ॥ ४ । ७ । ८ ) । पावका प्रक्षालयन्त्युदकेन । का पुनरसाविति । सरस्वती माध्यमिका वाक् । वाजेभिर्वाजिनीवती । अन्नेन हविषोदकेन वा तद्वती । यज्ञमेतमस्माकं वाजेभिः अन्नैः युक्तं वष्टु कामयताम् । अथवा । अगादिभावमापन्ना देवान्प्रति वहतु । वक्ष्यति हि 'तां विश्वरूपाः पशवो वदन्ति' ( निरु० ११ । २९ ) इति । धियावसुः कर्मधना । 'तस्या एषा अपरा भवति' स्फुटतरोदकलिङ्गा ॥ २६ ॥

---

१ ग. ज. प्रादुम्°. २ ग. ज. °मस्मत्स्वर्था°; च. °मस्मत्स्वर्था समास्व. ३ क. ख. घ. ट. ठ. ड. च. °वत्यसीति वा । वा. ४ ग. च. २५ क. ख. ४ ( २५ ); ठ. ड. °वा । इति निरुक्तभाष्ये ५ ध्याये २५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ क. ख. ५ ( २५ ); त. द. ५ ६ ग. इति । म°; ठ. ड. पावका न इति ७ क. ख. घ. ट. ठ. ड. सारस्वते च हविषि च. °स्वतेऽह° च. ८ क. ख. ५ ( २६ ); ठ. ड. °वति । इति निरुक्तभाष्ये ५ ध्याये २६ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

१२

**महो अर्णः सरस्वती प्रचेतयति केतुना । धियो विश्वा वि राजति ( ऋ० सं० १ । ३ । १२ ) ॥ महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते वाग्व्याख्याता तस्या एषा भवति ॥ २७ ॥**

सैव सरस्वती

महो अर्णः सरस्वतीति । पूर्ववदार्षं विनियोगश्च । महो अर्णो महदुदकं सरस्वती माध्यमिका वाक् । किं करोति । प्रचेतयति प्रज्ञापयति आविःकरोति वर्षभावेन । केन पुनराविःकरोति । केतुना स्वेन कर्मणा प्रज्ञया वा । न ह्यप्रज्ञानवत्यचलिष्टा चेतच्छक्ता कर्तुम् । एवं चोदकमाविःकुर्वती धियो विश्वा विराजति । सर्वाणि प्रज्ञानान्यभिविराजति । कथम् । उदकादन्नमन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति ।

सरस्वती माध्यमिका वाक्

'वागर्थेषु विधीयते' इत्युपपत्तिवचनम् । के पुनर्वाचोऽर्थाः । 'चतस्र ऊर्जं दुदुहे पयांसि' ( निरु० ११ । २८ ) इत्येवमादय उदकाधिकारलक्षणाः । तेष्वयमपि सरस्वती विधीयते 'महो अर्णः' इत्येवमादिषु । 'तस्मान्माध्यमिकां वाचं मन्यते' नैरुक्ताः ।

'वाक्' (१९) वक्तव्या । सा पुनः 'व्याख्याता' 'वचेः' ( निरु० २ । २३ ) इति । 'तस्या एषा भवति' ॥ २७ ॥

**यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ( ऋ० सं० ८ । १०० । १० ) ॥ यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयां-**

१ छ. त. द. °णि भूतान्यभि°. २ क. ख. ६(२९):त. द. ६. ३ ग. °तीति । पृ°. ४ क. ख. ६ (२७); ठ. ड. °षति' इति निरुक्तभाष्ये ५ अध्याये २७ खण्डः; ग. च वर्जमिन्तरेष्वङ्को नास्ति. १८

**सि क्व स्विदस्याः परमं जगामेति यत्पृथ्वीं गच्छन्तीति वा यदादित्यरश्मयो हरन्तीति वा तस्या एषापरा भवति ॥ २८ ॥**

यद्वाग्वदन्तीति । नेमस्यार्थम् । सारस्वते पशौ विनियोगः ( आश्व० श्रौ० ३ । ८ ) । यदा माध्यमिका वाग्वदन्ती

वाक्

निर्वचन्ती । कानि । अविचेतनानि अविज्ञातार्थानि शब्दरूपाणि स्तनयित्नुलक्षणानि । राष्ट्री ईश्वरी माध्यमिकानां देवतानाम् । निषसाद निषीदति व्याप्नोति आत्मानं वर्षकर्मणि मन्द्रा मदना हर्षकरी तर्पयित्री वा लोकस्य । अथ तदा । किमिति । चतस्र ऊर्जं दुदुहे पयांसि । चतस्रो दिशः प्रति अनुदिशश्च दुदुहे दुग्धे प्रक्षरति ऊर्जम् अन्नं पयांसि उदकानि । तेषां च पयसां क्व स्विदस्याः परमं जगाम । क्वैता निष्पाद्यौषधीर्गच्छन्ति कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति कस्तत्त्वं जगाम जानाति यानि पृथिव्यामवतिष्ठन्ते यानि वादित्यरश्मयो हरन्तीति एवमनुपक्षीणपयस्केयमिति श्रूयते ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । इयमेव वाक्सर्वप्राण्यन्तर्गता माध्यमिकी सर्वार्थाभिवादिनी भवतीति विभूत्युपप्रदर्शनार्थम् ॥ २८ ॥

**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ( ऋ० सं० ८ । १०० । ११ ) ॥ देवीं वाचमजनयन्त देवास्तां सर्वरूपाः**

१ क. ख. ७ (२८); त. द. ७ २ ग. °न्तीति । ने°. ३ क. ख. घ. ट. °चयन्ती; च. चन्ती य; ठ. ड. प्रज्ञापयन्ती ४ ग. ज. °रा या माध्य°; च. °रा माध्य° या; ठ. ड. °श्वरी माध्य°. ५ ग. ज. °यितृ; च. °यितृ० त्री. ६ ग. ज. °सी पयां; च °रनि पयां ऊर्जमन्नं. ७ क. ख. घ. ट. ठ. ड. क्वैत नि नि°. ८ ग. ज. जानाति जगाम; घ. ट. ठ. ड. जगाम अजान । यानि°; च. जानाति. जगाम ९ क. ख. घ. ट. ठ. ड. चादि°; च. वादि° चा. १० ग. ज. °मिति नियुच्यते. ११ क. ख. ७ ( २८); ठ. ड. °नार्थम् । इति निरुक्तभाष्ये ऽध्याये २८ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुतानुमती राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायतेऽनुमतिरनुमननात्तस्या एषा भवति ॥ २९ ॥

वागत्र

देवीं वाचमजनयन्तेति । तदेवार्षम् । देवीं दात्रीमुदकानां यां वाचम् अजनयन्त माध्यमिका देवास्तामेवैतां यथाभिमतार्थाभिधायिकां विश्वरूपाः सर्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च । व्यक्तवाचो मनुष्यादयोऽव्यक्तवाचो गवादयः । यैवं सर्वपशुभिरुच्यते सा नः सास्माकं मन्द्रा मदना इषं चोर्जं च दुहाना प्रक्षरन्ती धेनुः तर्पयित्री वागस्मानुपैतु सुष्टुतेत्येतदाशास्महे ।

अनुमतिः राका च देवपत्न्यौ इति नैरुक्ताः

पौर्णमास्यौ इति याज्ञिकाः

‘ अनुमती राकेति देवपत्न्याविति नैरुक्ताः ’ । सह पदयोरुपन्यासस्तुल्योऽनयोरभिधेयविचार इति । मध्यस्थाने देवपत्न्याविति निर्ज्ञाते तदभिधाने इति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । ते च ब्राह्मणमुदाहरन्ति ‘ या पूर्वा पौर्णमासी ’ ( ऐ० ब्रा० ३२ । ९ ) इत्येवमादि । कालाधिदैवते चन्द्रसहचारिण्याविति मध्यस्थाने । पौर्णमास्यमावास्ययोर्नक्षत्रेष्टकामध्य उपधानात् ( तै० सं० ३ । ५ । १ ॥ ४ । ४ । १० ) नक्षत्रत्वम् । अतश्च प्रदर्शनात्सर्व एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्तिमाप्नुवन्मध्यस्थान एवेति लक्ष्यते ।

‘ अनुमतिः ( २० ) अनुमननात् ’ । अनुमता किलेयमृषिभिर्देवै-

१ छ. त. द. मनना°. २ क. ख. ८ ( २९ ); त. द. ९. ३ ग. °न्तेति । त°; ठ. ड. वाचमिति. ४ ग. ज. दातृमु°; च. दातृमु° त्री. ५ क. ख. घ. ट. ठ. ड. °न्ति तत्पूर्वकत्वाद्वाक्प्रवृत्तेः ६ क. ख. घ. ट. ठ. ड. इषम् अन्नं पयोघृतादिरूपं रसं च ऊ°; च. इषं ऊर्जा° अन्नं पयोघृतादिरूपं रसं. ७ क. ख. घ. ट. ठ. ड. सुष्टु स्तुते°; च. सुष्टुते° सु स्तु. ८ ग. ज. ब्राह्मणमु°.

**अनुमतिः कस्मात्** श्चातुर्दशके पक्षेऽस्त्वियं पौर्णमासीति । ' तस्या एषा भवति ' ॥ २९ ॥

**अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ( तै० सं० ३ । ३ । ११ ) ॥ अनुमन्यस्वानुमते त्वं सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि प्रवर्धय च न आयू राका रातेर्दानकर्मणस्तस्या एषा भवति ॥ ३० ॥**

अन्विदनुमत इति । वामदेवस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० २ । ६ । ४ ) । हे अनुमते त्वम् अनु- **अनुमतिः** मन्यासै अनुमन्यस्व अस्माकं यदनुमन्तव्यं त्वया । शं च नस्कृधि । सुखं चास्माकं कुरु । इषम् अन्नं चास्माकं तोकाय अपत्याय धेहि । आयूंषि च नः प्रतारिषः प्रतीर्णानि कुर्विल्येतदाशास्महे ।

सैव पौर्णमासी पञ्चदशके पक्षे ' राका ' ( २१ ) इत्युच्यते । सा **राका कस्मात्** पुनः कस्मात् । ' रातेर्दानकर्मणः ' । हविर्दाननिमित्तं हि सा भवति । ' तस्या एषा भवति ॥ ३० ॥

**राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ( ऋ० सं० २ । ३२ । ४ ) ॥ राकामहं सुह्वानां सुष्टुत्याह्वये**

१ क. ख. ८ ( २१ ); ठ. ड. °वति । इति निरुक्तभाष्ये ९ ध्याये २१ खण्डः; ग. च. वर्जमितरेष्वयं नास्ति. २ क. ख. ५ ( ३० ); त. द. ५. ३ ग. इति । वा ; ठ. ड. मन्ते त्यमिति. ४ क. ख. च. ट. ठ. ड. कुरु वर्धयेत्यं°; च. कुर्वित्यं° न वर्धय°. ५ क. ख. ९ (३०); ट. ड. °वति । इति निरुक्तभाष्ये

**शृणोतु नः सुभगा बोधत्वात्मना सीव्यत्वपः प्रजननकर्म सूच्याच्छिद्यमानया सूची सीव्यतेर्ददातु वीरं शतदायमुक्थ्यं वक्तव्यप्रशंसं सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ता अमावास्ये इति याज्ञिका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते सिनीवाली सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेस्तस्मिन्नन्नवती वालिनी वा वालेनेवास्यामणुत्वाच्चन्द्रमाः सेतव्यो[1] भवतीति वा तस्या एषा भवति ॥ ३१ ॥**

राकामहं सुहवामिति । गृत्समदस्यार्षम् । दर्विकासु विनियोगः ( मैत्रा० सं० २ । ६ । ४ )। राकामहं सुहवां स्वाह्वानां यस्याः शोभनमाह्वानं तां सुष्टुत्या शोभनया स्तुत्या आह्वये । सा पुनः सुभगा

राका

सुधनास्माभिराहूयमाना शृणोतु । श्रुत्वा च बोधतु । कर्तव्यतया तदवगच्छतु । यदपि च न ब्रूमहे तदपि आत्मना एव बुध्यताम् । अपि चेदमुच्यते । एवं सीव्यतु अपः । संतनोतु प्रजननकर्म अस्माकम् । सूच्या अच्छिद्यमानया अविच्छिन्नेन प्रजासंतानेन । न च पुनः प्रजामात्रमर्थयामहे । किं तर्हि । ददातु वीरं पुत्रम् । किंलक्षणम् । शतदायं बहुप्रदम् । उक्थ्यम् वक्तव्यप्रशंसं च अपरिसमाप्तस्तुतिम् ।

'सिनीवाली कुहूः' इति पूर्ववदुपन्यासः । 'अमावास्ये इति याज्ञिकाः' । तथैव ब्राह्मणमपि चोदाहरन्ति । 'तथैव पूर्वा सिनीवाली उत्तरा कुहूः' ( ऐ० ब्रा० ३२ । ९ ॥ मैत्रा० सं० ४ । ३ । ५ ) ।

'सिनीवाली' (२२) कस्मात् । 'सिनमन्नं भवति' । तत्कस्मात् ।

सिनीवाली कस्मात्
सिनम्
वालम्

'सिनाति' बध्नाति । 'भूतानि' रसादिभिर्धातुभिः । 'वालं' किमुच्यते । 'पर्व' । तत्कस्मात् । 'वृणोतेः' । वृण्वन्ति देवास्तत्र हवींषि । 'तस्मिन्' पर्वण्यसौ सिनिनी 'अन्नवती' इति सिनीवाली । अथवोत्तरपदे विकल्पः । 'वालिनी' वाले-

१ क. ख. ङ. थ. ध. ट. ड. सेवित°. २ क. ख. १० (३१); त. द. १०. ३ ग. °मिति । गृ°; ठ. ड. °महमिति. ४ क. ख. घ. ट. ठ. ह. सा च पु°; च. सा °पु° च. ५ क. ख. घ. ट. ठ. ह. 'च' नास्ति; च. चं. ६ ख. ज. ह. वाले°.

स्तद्वती । सिनिनी च सा वालिनी चेति सिनीवाली । औपमिकं वा । कथमिति । 'वालेनेवास्यामणुत्वाच्चन्द्रमाः सेतव्यो' वेद्धव्यो 'भवति'। एवमणुरसौ चन्द्रमा भवत्यस्यां येन ज्ञायते वालेनाप्ययं सीयेत बध्येतेति । 'तस्या एषा भवति' ॥ ३१ ॥

**सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ( ऋ० सं० २ । ३२ । ६ ) ॥ सिनीवालि पृथुजघने स्तुकस्त्यायतेः संघातः पृथुकेशस्तुके पृथुष्टुते वा या त्वं देवानामसि स्वसा स्वसा सु असा स्वेषु सीदतीति वा जुषस्व हव्यमाहुतं प्रजां च देवि दिश नः कुहूर्गूहतेः क्वाभूदिति वा क सती हूयत इति वा क्वाहुतं हविर्जुहोतीति वा तस्या एषा भवति ॥ ३२ ॥**

सिनीवालि पृथुष्टुके इति । गृत्समदस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० २ । ६ । ४ ) । हे सिनीवालि पृथुष्टुके विस्तीर्णजघने । अथवा । पृथुष्टुके पृथुकेशस्तुके पृथुकेशकलापे । अथवा । पृथुष्टुते । या त्वं देवानां स्वसा भगिनी माध्यमकानां सा त्वं जुषस्व आसेवस्व एतत् हव्यम् आहुतं मर्यादया विधानतो हुतमस्माभिः । आसेव्य च प्रजामस्माकं दिश अतिसृज देहीत्याशास्महे ।

सिनीवाली

१ ग. ज. वालेनेवा°; ड. वाले°. २ ग. ज. स्यत°; च. स्वत° स; ठ. ड. सेवितव्यो. ३ क. ख. थ. च. ट. ठ. ड. बोद्ध°. ४ ग. च. ज. ह. वाले°. ५ क. ख. घ. ट. ठ. ह. बोध्ये°; ग. ज. भवति; च. भायत °तीति बोध्ये. ६ क. ख. १० (३१); ठ. ड. °वति । इति निरुक्तभाष्ये १ध्याये ३१ खण्डः; ग. च. वर्जाम-तरेषवङ्का नास्ति. ७ छ. न. ह. °स्तका. ८ ह. थ. ड. ट. पृथुस्तुके; छ. त. द. पृथुष्टुतिवा या°. ९ क. ख. ङ. थ. ध. ठ. ड. हव्यमहुतं प्र°. १० क. ख. ११ (३२); त. द ११. ११ ग. इति । गृ°. १२ ग. च. ज. °सेव्यं. १३ क. ख. घ. ट. ठ. ड. न प्रजां देवि दिदिड्ढि नः प्र°, न. प्र° प्रजां देवि दिदिड्ढि नः.

कुहूः कस्मात्

'कुहूः (२३) गूहतेः'। निगूढगमनो चन्द्रमसा। 'क्वाभूदिति वा'। तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति क्वासावभूदद्येति। 'क्व सती हूयत इति वा'। सैवात्मना देवताभावादप्रत्यक्षा न ज्ञायते क्वापि सत्याहूयत इति। अतो वितर्क्या भवति। 'तस्या एषा भवति' ॥ ३२ ॥

कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितृणां तस्यै ते देवि हविषा विधेम (मैत्रा० सं० ४। १२। ६)॥ कुहूमहं सुकृतं विदितकर्माणमस्मिन्यज्ञे सुह्वानामाह्वये सा नो ददातु श्रवणं पितृणां पित्र्यं धनमिति वा पित्र्यं यश इति वा तस्यै ते देवि हविषा विधेमेति व्याख्यातं यमी व्याख्याता तस्या एषा भवति ॥ ३३ ॥

कुहूः

कुहूमहं सुकृतमिति। देविकासु विनियोगः (मैत्रा० सं० २। ६। ४)। कुहूमहं सुकृतं शोभनानां कर्मणां कर्त्रीं विद्मनापसं सर्वत्र प्रत्यक्षकर्माणम् अस्मिन्यज्ञे सुहवां स्वाह्वानां शोभनमाह्वानं यस्यास्तां जोहवीमि आह्वयामि। सा अस्माभिराहूतास्मिन्यज्ञ एत्य हविर्भुक्त्वा अस्माकं ददातु श्रवणं पितृणां 'पित्र्यं धनमिति वा पित्र्यं वा यशः'। कुह्वेचिन्तामिस्मा:। प्रत्यक्षीकृत्योत्तरेण पादेनास्तौत्। या त्वमस्माकमेतत्करोषि तस्यै तुभ्यं हे देवि कुहु हविषा विधेम। दद्म इत्यर्थः। अथवा। तां हविषा परिचरेमेति।

१ च. क्वाभ क्वा २ क. ख. ग. ज. घ. ठ. ड. दस्येति; च. ट. दस्य° ये ३ ग. च. ज °क्षात्र ज्ञा°; ठ ड. °क्षात्त ज्ञा°. ४ क. ख. ११ (३२); ठ. ड. वति। इति निरुक्तभाष्ये पञ्चमाध्याये ३२ खण्डः; ग च वर्जमितरेष्वङ्को नास्ति. ५ क. ख. ड. थ. ध. ठ. ड. सुवृतं. ६ क. ख. पितृणां. ७ क. ख. १२ (३३); त. द. १२. ८ क. ख. ध. ट. सुवृ°; ग. सुकृतमिति। दे°; ठ ड. °अहमिति. ९ ९. ड सुवृतं. १० ग. ज. पित्र्यं यश; च. पित्र्यं य° वा ११ ग. ज. °मद्दग्धेत्यर्थ°; च. दद्म इत्यर्थः हविर्द १२ क. ख. घ. ट. ठ. ड. ता तां; घ. त्वां तां. १३ क. ख. घ. ट ठ. ड. °चराम इति; च °चरेम इ° रा.

'यमी (२४) व्याख्याता' यमेन (निरु० १०। १९)। लिङ्गमात्रविशेषः। "तस्या एषा भवति"[1] ॥ ३३ ॥

---

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्। तस्य वा त्वं मन इच्छा[2] स वा तवाधा कृणुष्व संविदं सुभद्राम् (ऋ० सं १०। १०। १४) ॥ अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते लिबुजेव वृक्षं तस्य वा त्वं मन इच्छेः स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्रां यमी यमं चकमे तां प्रत्याचचक्ष[3] इत्याख्यानम् ॥ ३४[4] ॥

[5]एकादशाध्यायस्य तृतीयः पादः ॥

---

अन्यमू षु त्वं यम्यन्य इति[6]। यमी किल यमं चकमे भ्रातरम्।

यमी

तां किल यमोऽनयर्चा प्रत्याचचक्षे। कथम्। हे यमि अन्यमू षु त्वम् अन्यमेव त्वं परिष्वजस्व मैथुनाभिप्रायेण। लिबुजेव वृक्षं वल्लीव काचिद्दृढं समीपजं वृक्षम्। अन्य एव त्वां परिष्वजतां यस्य योग्या त्वमनेनाभिप्रायेण परिष्वक्तुम्। तस्य वा त्वं मन इच्छ। तस्य च त्वं मनः प्रवेष्टुमिच्छ। स वा तव। अथैवमेकचित्त्यमुपगम्यमानेन समानेन सह कृणुष्व संविदं सङ्कल्पा[7]दिमैथुनकार्यम्। सुभद्रां कल्याणभद्रां संविदमुभयलोकाविरोधिनीमित्यभिप्रायः।

निरुक्तपक्षे[8] तु माध्यमिको[9] यमो माध्यमिकां वाचमुपसमात्मनः प्रविभक्तामिव कृत्वोभयस्थानां तां ब्रवीति। हे यमि अतीतेऽस्मत्परिष्वङ्गसमयः। प्रभातमिदानीम्।

माध्यमिकपक्षे यमी उषाः

लिबुजेव वृक्षं सूर्यमानं परिष्वक्तुमिच्छ। तस्य च त्वं मनः प्रकाशमनुप्रवेष्टुमिच्छ[10]। स च तव प्रकाशमनु[11]प्रविशतु। अथै-

---

१ क. ख. १२ (३३); ठ. ह. °वति। इति निरुक्तभाष्ये पञ्चमाध्याये ३२ खण्डः; ग. च. वर्गमितेरष्वङ्को नास्ति. २ छ. इच्छा; त. इच्छां स° छ ३ छ. त. द. °चचक्षन्ता. ४ क. ख. १३ (३४); त. द. १३. ५ छ. द. तृती°; त. एकादशाध्याये तृ°; ङ. थ ध. ठ. ह. 'एका० पादः' नास्ति. ६ ग इति°। य°; ठ. ह. अन्यमू ष्विति. ७ क. ख. संकल्पा°; प ट. संजकल्पा°. ८ ग. ज. °पक्षे मा°. ९ क. ख. माध्यमिको. १० ग. ज. °मिच्छति सा व मनः प्रकाशमनुप्रवेष्टुं तस्य°; च. °मिच्छति सा वै मनः प्रकाशमनुप्रवेष्टुं तस्य°. ११ ब. ट. ठ. ह. °नुप्रवि°.

वमितरेतरसंपर्कात्तेन सहैकीभूता लोकोपकाराय कुरुष्व परस्परसंविदं संवित्साधनं प्रकाशमिति ॥ ३४ ॥

पैदशाध्यायस्य तृतीयः पादः ।

चतुर्थः पादः ।

**उर्वशी व्याख्याता तस्या एषा भवति ॥ ३५ ॥**[2]

'उर्वशी[3] व्याख्याता' । 'उर्वशी' (२५) वक्तव्या । सा पुनः 'व्याख्याता' । तदिहापि देवतायां योज्यम् । 'उर्वभ्यश्नुते' । बहूदकं व्याप्नोति । 'उरु वा वशोऽस्याः' । महानस्याः काम उदके (निरु० ५ । १३) । 'तस्या एषा भवति' ॥ ३५ ॥[4]

---

**विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्ठो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ( ऋ० सं० १० । ९५ । १० ) ॥ विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनमयं जायेताद्भ्योऽध्यप इति नैर्यो मनुष्यो नृभ्यो हितो नरापत्यमिति वा सुजातः सुजाततरोऽथोर्वशी प्रवर्धयते दीर्घमायुः पृथिवी व्याख्याता तस्या एषा भवति ॥ ३६ ॥**[6]

विद्युन्न या पतन्तीति[7] । मध्यमः पुरूरवाः स्त्रिलपक्षे ब्रवीति । आत्मनो ज्योतिषः शब्दस्य च विभागमिव कृत्वा । विद्युन्न विद्युदिव । संप्रत्यर्थे वा नकारः । किमिति । या पतन्ती गच्छन्त्यन्तरिक्षे मेघोदरेषु दविद्योत् पुनःपुनर्द्योतते पुनःपुनरात्मानं प्रतिलभते । कथम् । भरन्ती हरन्ती मे मम स्वभूतानि

उर्वशी

---

१ क. ख १३ ( ३४ ), ठ ड. °मिति । १३ ध्यायस्य ३ पादः । ३४; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. १ ( ३५ ); त द. १. ३ क. ख. घ. ट. ठ. ड. 'उर्वशी व्याख्याता' नास्ति; च. उर्वशी व्याख्याता. ४ क. ख. १ ( ३५ ); ट. ड. °वति° । इति निरुक्तभाष्ये ५ ध्याये ३५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ मर्यो. ६ क. ख. २ ( ३६ ); त. द. २. ७ ग. °न्तीति । म°

३४

अप्या अप्यानि काम्यानि उदकानि अन्तरिक्षरमाणानि अन्तरिक्षलोकस्य अधिपत्नी योर्वशी सा यदैवमुदकानि हरन्ती मेघेभ्यः पतन्ती भृशं स्वयं विद्योतते नूनं निश्चयेन तदा जनिष्टो अपः अध्यापः अधिक उदकोर्मिर्जायते यः सर्वमिदमाच्छादयति नर्यो नृभ्यो हितः पथ्यः सस्यसंस्करः। 'नरापत्यमिति वा' इत्यैतिहासिकपक्षं द्योतयति। सुजातः सुजाततरः शोभनादपि शोभनतरः उदकोर्मिः। अथ तेन महतोदकोर्मिणा सस्यमभिनिष्पाद्य लोकस्यान्नसंप्रदानद्वारेण प्रोर्वशी तिरते प्रतिरते प्रवर्धयते दीर्घमायुः।

ऐतिहासिकपक्षे त्वैळः पुरूरवाः उर्वश्या अप्सरसा वियुक्तो ब्रवीति।

ऐतिहासिकपक्षे अर्थः विद्युदिव या पतन्ती अद्योतत भृशं बहुधात्वया भरन्ती धारयन्ती अनेकानि स्त्रीगतानि हारभावादीनि काम्यानि वस्तूनि मे मम अप्या नित्यमासक्त्या प्रिया। सा च पुनराहितगर्भा यतोऽतो ब्रवीमि। जनिष्टो अपः निश्चयेन जनिष्यते अध्यापः अधिककर्मा नर्यः नृभ्यो हितः सम्यक्परिपालयिता नराणाम्। अथवा। मम नरस्यापत्यमायुर्नाम राजा यं पुराणविदः कथयन्ति। सुजातो मत्तः सुकृतात् वीर्यवतो जातो विशेषत उर्वश्याः क्षेत्रगुणात्सुजाततरः। तस्य बाल्यस्यमुर्वश्यस्मदसंनिधेऽपि प्रवर्धयते तद्योग्यैः कर्मभिर्दीर्घमायुरिति।

'पृथिवी(३६)व्याख्याता'। 'अथ वै दर्शनेन पृथुः' (निरु० १। १४) इत्यत्र। इह तु माध्यमिका। 'तस्या एषा भवति'॥ ३६॥

---

**बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ( ऋ० सं० ५।८४।१ )॥ सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलममुत्र धारयसि पृथिवि**

---

१ क. ख. घ. ट. ठ ड. अक्षरमाणा°; च. अन्तरिक्ष°. २ क. ख. घ. ट. ठ. ड. °हितः सस्य°; च. पैथ्यैः. ३ ग. ज. प्रोर्वशी प्र ; च प्रोर्वशी॰ प्र° तिरते. ४ ट. ठ. ड. त्वेळः. ५ ग ज पुरूरवाः. ग पुरूरोरवाः° रूर. ६ घ. ट. ठ. ड. नरापत्या°; च. न. . . . ७ क. ख. २ (३६); ठ. ड. °इति। इति निरुक्तोत्तरषट्के ५ ध्याये ३६ खण्डः; ग च. वर्जमितरष्वङ्को नास्ति. ८ क. ख. छ. त. द. न बलित्था.

प्रजिन्वसि या भूमिं प्रवणवति[1] महत्त्वेन महतीत्युदकवतीति वेन्द्राणीन्द्रस्य पत्नी तस्या एषा भवति ॥ ३७ ॥[2]

---

पृथिवी

बळित्था[3] पर्वतानां खिद्रं[4] बिभर्षि पृथिवि । प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ अत्रेरार्षम् । बळ् इति सत्यस्य[5] नाम (निघ० ३ । १० । १)। इत्थेति अमुत्रेत्यर्थः । हे पृथिवि माध्यमिके सत्यं यथाभूतम् अमुत्र[6] अमुष्मिन्नन्तरिक्षलोके वर्षाणा खिद्रं मेघानां छेदनं येन पर्वताः मेघाश्छेत्तुं शक्यन्ते तद् बलं बिभर्षि धारयसि । हे प्रवत्वति प्रवणवति[7] गमनवति[8] या त्वं भूमिं प्रजिन्वसि वर्षमुत्सृजन्ती मह्ना महत्त्वेन हे महिनि महति । अथवा । उदकवति । या त्वमेवं भूमिं प्रजिन्वसि सा कथं न मेघानां पर्वतानां छेदनसमर्थं बलं धारयसीत्यभिप्रायः[9] ।

*यास्कस्याभिप्रायो मैत्रायणीसंहितायां दत्तविनियोगेन विरुद्धः*

पृथिवि त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना । हिरण्यनाशेष्टयां भौमस्यैककपालस्येयं याज्या (मैत्रा० सं० ४ । १२ । २)। तत्र विज्ञायते । 'अथ यद्भौमोऽस्यां हि स तदविन्दत्' (मैत्रा० सं० २ । २ । ७) इति । तेन तत्रेयं भूमिरिज्यते । न च भूमिरस्यामृचि प्रधानत्वेन वर्तते । यथा चायमाचार्यो निराह तदयमस्योदाहरणाभिप्रायः । स च विनियोग इति[10] विरोधः । अविरोधमेनयोर्मेधाविनः[11] समनुगंस्यन्ते[12] ।

'इन्द्राणी (२७) इन्द्रस्य पत्नी' । इन्द्रस्य विभूतिः पृथक्त्वे वा इन्द्राणी कस्मात् निर्ज्ञाता पौराणिकैः । 'तस्या एषा भवति'[13] ॥ ३७ ॥

---

१ छ. ड. प्रणवति, त. प्रवणवति, ठ. प्रवति. २ क. ख. ३ (३७); ट. द. ३. ३ क. ख. ग. च. ज. व. बळित्था. ४ ग °मिति । अ°. ५ ठ. ड. बट्. ६ क. ख. घ. ट. ठ. ड. सत्यनाम. ७ ग. ज तस्मुत्र; च. त्वमुत्र. ८ च. प्रवण-वति° व. ९ क. ख. घ. ट. न. ड. धारयिष्यसि । अवश्यं धारय°; च. धारय° विष्यसि । अवश्यं धार. १० क. ख. घ. इत्यविरोधोऽनयो°; च. इत्यविरोधः । अविरोधमेनयो°, विरोधमेन° अधममनायो म; ट. इत्यविरोधः अविरो° असमान-र्थो म इति पाठः । इति निरोधः अशक्यंति विरोधमेनयोर्मेधाविनः समनुगंस्यन्ते इति वा पाठः; ठ. ड. इत्यविरोधः । इति विरोधः अशक्यंति विरोधमेनयोर्मेधाविनः समनुगस्यन्ते इति वा पाठः. ११ क. ख. घ. ट. °विना स°. १२ क. ख. घ. ट. नुगंस्यते; ग. च. ज. °गम्यंते. १३ क. ख. ३ (३७); ठ ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के ५ ध्याये ३७ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

इन्द्राणीमासु नारिषु सुभगामहमश्रवम्। न ह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।११)॥ इन्द्राणीमासु नारिषु सुभगामहमश्रृणवं न ह्यस्या अपरामपि समां जरया म्रियते पतिः सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूमस्तस्या एषापरा भवति[3] ॥ ३८ ॥

---

इन्द्राणीमासु नारिष्विति[4]। वृषाकपेरार्षम्[5]। पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियोगः ( अश्व० श्रौ० ८।३ )। निर्वाय ब्रवीति। सर्वास्वेव आसु नारिषु इन्द्राणीम् एव अहं सुभगां सौभाग्ययुक्तां लक्षणवतीम् अश्रवम्[6] अशृणवम्। केन हेतुना। यत आह। न ह्यस्या अपरं चन। 'हि'शब्दो हेत्वर्थः। चनेत्यप्यर्थे। यस्मादस्या अपरमपि समां संवत्सरं प्रति न कदाचिदपि पतिर्म्रियते नापि जीर्यते यथान्यासां प्राकृतानां नारीणाम्। कतमः पतिः। विश्वस्मात्सर्वस्मात् जगतो य इन्द्रः उत्तरः। योऽयमिन्द्र उद्गततरः। तमेतम् इन्द्रमधिकृत्य ब्रूम इत्याचार्यो ब्रवीति।

इन्द्राणी

'तस्या एषापरा भवति'। सा पुनः किमर्थम्। ऋषिर्वृषाकपिः प्रसिद्धः[8]। स पुनरादित्योऽभिप्रेतो नैरुक्तानाम्। तद्रूपप्रदर्शनायापरामाह[9] ॥ ३८ ॥

---

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते। यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०। ८६।१२)॥ नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूमो गौरी रोचतेर्ज्वलतिकर्मणोऽयमपी-

---

१ द. ध. नारीषु २ छ. °मश्रवं° श्रृण. ३ क. ख. ४ ( ३८ ), त. द ४. ३६
४ ठ. ड. इन्द्राणीमिति ५ ग. °ष्विति। वृ°. ६ क. ख घ. ट. ठ. ड. °र्षम्। पङ्क्तिः। पृ°; च. °र्षम्। ५°पाङ्क्तिः। ७ ग. ज. °श्रवं केन; च. °श्रवं केन° अशृणवं. ८ ब. ऋषिः स एव। स पुन°; ट. ऋषिः स एव। स पुन° वृषाकपिः प्रसिद्धः. ९ क. ख ४ (३८); ठ. ड. °माह। इति निरुक्तभाष्ये ११ ध्याये ३८

तरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति तस्या एषा भवति ॥ ३९ ॥

नाहमिन्द्राणीति[१]। समानो विनियोगः पूर्वयार्षे च। इन्द्रो ब्रवीति।

**इन्द्राणीव** विभक्तामिवेन्द्राणीमात्मनः कृत्वाह। नाहमिन्द्राणि रारण। न रमे अहम्। सख्युर्वृषाकपेर्ऋते। य एष मम सखा वृषाकपिस्तस्मादृते। किं योऽयमृषिर्मनुष्येषु प्रसिद्धः। नेत्युच्यते। यस्येदमप्यं हविः। अप्सु शृतं चरुपुरोडाशादि वा। 'अद्भिः संस्कृतमिति वा'। सोऽस्य मे प्रिय इष्टः सर्वेष्वपि देवेषु। निर्धार्योच्यते। यस्य विशेषतो गच्छति। विश्वस्मात् सर्वस्मात् अपि जगतो योऽहम् इन्द्र उत्तरः उद्गततरः सोऽप्यहमेवं ब्रवीमीति।

'गौरीः (२८) रोचतेः' ज्वलत्यर्थस्य। माध्यमिका वाक्। सा पुनर्दीप्ति-

**गौरीः कस्मात्** मती। 'अयमपीतरो' यो 'गौरो वर्णः' सोऽपि 'एतस्मादेव' रोचतेः। स दीप्तिरूपत्वात्कृष्णादीनपेक्ष्य 'प्रशस्यो भवति'। 'तस्या एषा भवति' ॥ ३९ ॥

---

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ( ऋ० सं० १। १६४। ४१ ) ॥ गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने तस्या एषापरा भवति[६] ॥ ४० ॥

१ क. ख. ५ ( ३९ ); त. द. ५. २ ग. °णीति। स°. ३ क. ख. °या आर्षे च। इन्द्रो°; घ. ट. °याः आर्षे तु इन्द्रो°; ठ. ड. °या आर्षे तु इन्द्रो°. ४ ग. ज. चरु च पु°. ५ क. ख. ५ (३९); ठ. ड. °वति। इति निरुक्तभाष्ये ५ ध्याये ३९ खण्डः; ग. च. पर्जमितरेवङ्का नास्ति. ६ क. ख. ६ ( ४० ); त. द. ६.

गौरी:

गौरीर्मिमायेति[1] । अस्यवामीये दीर्घतमस आर्षम् । गौरी सर्वमिदं निर्मिमीते । कथम् । सलिलानि तक्षती कुर्वती । उदकपूर्वकत्वात्सर्वनिर्माणस्य । कथमुदकानि कुर्वती । एकपदी बभूवुषी एकपदी भवती मध्यमेन सहकत्वमपन्ना[2] । द्विपदी मध्यमेन चादित्येन च । चतुष्पदी दिग्भिः अनपेक्ष्येन्द्रादित्यौ । अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्च सह आदित्येन च । सहस्राक्षरा बहूदका परमे व्यवने । विभक्तानां भूतानां यत्परममवनमेकं सर्वभावानामविभक्त एक आत्मा यस्तदात्मनैवंभूता[3] सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थमिति । गौरीति गुणाभिधानमप्रसिद्धाभिधेयं छन्दसि देवतायाम् । यतः परया समर्थयति[4] ॥४०॥[5]

---

**तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ( ऋ० सं० १ । १६४ । ४२ ) ॥ तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति गौर्व्याख्याता तस्या एषा भवति[6] ॥ ४१ ॥**

---

गौरी एव

तस्याः समुद्रा अधि वि क्षरन्तीति[7] । अलिङ्गो मन्त्र इति चेत्तस्मा इत्येतदेव लिङ्गमन्त्रादिश्यते संबन्धादृचोः । नान्यत्र लिङ्ग । तस्या गौर्याः अधि सकाशात् समुद्राः मेघाः अधिविक्षरन्ति वर्षन्ति । तेन उदकेन जीवन्ति प्रदिशश्चतस्रः ।

---

१ ग. °यति । अ°. २ ठ. ड. °वती वायुना इन्द्रेण वा मध्य° ( ट पुस्तके ' मध्यमेन ' इत्यस्यार्थः ' वायुना इन्द्रेण वा ' इति प्रान्ते लिख्यते ). ३ क. ख. घ. ट. ठ ड. °नैव भूतानां स°; च. °नैवं भूता स° व भूतानां ४ ग. ज. समर्थयते; च. समर्चयति° र्थ. ५ क. ख. ६ ( ४० ); ठ. ड. °यति । इति निरुक्तभाष्ये ५ ध्याये ४० खण्ड ; ग. च. दुर्ग मितरेष्वङ्को नास्ति. ६ क. ख. ९ ( ४१ ); ग. ट. ७. ७ ठ. ड समुद्रा इति ८ ग. °न्तीति । अ°.

दिक्प्रतिदिग्निवासीनि[1] ‘ भूतानि ’ तेन जीवन्ति । ततः क्षरत्यक्षरम् । पुनः पुनः प्रतिसंवत्सरं तत एव क्षरत्युदकं मेघद्वारेण । तद्विश्वं भूतजातम् उपजीवति । एवं सैव सर्वोदकशाना गौरित्यभिप्रायः ।

‘ उदकम् अक्षरम् ’ इत्युच्यते । तत्कस्मात् । तद्धि सर्वमिदमभिव्याप्य ‘ क्षरति ’ । सर्वमिदं[2] संचरति । ‘[3] गौः व्याख्याता ’ ( निरु० २ । ५ )। ‘ तस्या एषा भवति ’ ॥ ४१ ॥

---

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ । सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ( ऋ० सं० १ । १६४ । २८ ) ॥ गौरन्वमीमेद्वत्सं निमिषन्तमनिमिषन्तमादित्यमिति वा मूर्धानमस्याभिहिङ्ङकरोन्मननाय सृक्वाणं सरणं घर्मं हरणमभिवावशाना मिमाति मायुं प्रप्यायते पयोभिर्माध्यमिवादित्यरश्मिर्वा वागेषा माध्यमिका घर्मधुगिति[4] याज्ञिका धेनुर्धयतेर्वा धिनोतेर्वा तस्या एषा भवति ॥ ४२ ॥

---

गौरमीमेदिति । दीर्घतमस[5] आर्षम् । महाव्रते विनियोगः ( ऐ० आ० ५ । ३ । २ ) । गौः माध्यमिका वाक् पुत्रम् अन्वमीमेत् अनुशब्दयति महद्भिः स्तनयित्नुशब्दैः आदित्यम् । स हि तस्या रसहरणाद्वत्सः । मिषन्तम् अनिमिषन्तम् अव्यवहितदर्शनं सर्वदा । आ । च । मूर्धानं शिरोरश्मीन्[6] अस्य मध्यस्थानप्राप्तं प्राप्य हिङ्ङकृणोत् हिकारेणाशब्दयति । मातवै सर्वलोकज्ञानाय उदकानां सृक्वाणं[7] सरणम् अनवस्थायिनमादित्यं घर्मं हरणं रसानाम् । अभिवावशाना पुनः पुनर्वाशमाना[8] प्रतिसंवत्सरमेव मिमाति मायुं शब्दं करोति । पयादमे च प्रकर्षेण वर्तते पयोभिः उदकैः ।

१ क. ख. घ. ट. ‘दिङ्निवा°’. २ क. ख. ग. ह. ठ. ड. °मिदं सचराचरं संच° च. ‘मिदं सं°’ सचराचर. ३ क. ख. ७ ( ४१ ); ठ. ड. ‘षति । इति निरुक्तभाष्ये ५ अध्याये ४१ खण्डः; ग. च. वर्जमितरेषु कोशेषु नास्ति. ४ क. ख. ८ ( ४२ ); त. ङ. ८. ५ ग. द्विति । दी°. ६ ग. च. अ. ‘शरश्मीन्’ . ७ च. ज. पूर्वावस्थ°. ८ क. ख. घ. ट. ठ. ड. ‘माना वाशनी प्रति°’

धर्मधुकार्थे । यवसमेव यवसम् । तज्जग्ध्वा पयस्विनी भव ।

धर्मधुकार्थे अर्थः वयमपि च त्वत्प्रत्तेन पयसा धनवन्तः स्याम । या त्वमस्माकमेवमुपकारिणी सा त्वं नित्यमध्निनगमध्ये । विश्वदानीं नित्यकालं पिब च शुद्धमकलुषमुदकमाचरन्ती अभ्यसन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । रूपतो हि पूर्वस्मिन्मन्त्रे धर्मधुक् सुतरामुपपद्यते । यतः परया वसुभिर्देवैः संबन्धान्माध्यमिकैव देवतेत्युपपादयति ॥ ४४ ॥

**हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ॥ दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ( ऋ० १ । १६४ । २७ ) ॥ इति सा निगदव्याख्याता पथ्या स्वस्तिः पन्था अन्तरिक्षं तन्निवासात्तस्या एषा भवति ॥ ४५ ॥**

हिङ्कृण्वतीति । पूर्ववदर्धादि । हिङ् इत्येवंप्रकारं शब्दं स्तनयित्नुं कुर्वती वसुपत्नी वसूनामुदकानामीश्वरा । वसूनां वा आदित्यरश्मीनां मरुतां वा । वत्स आदित्यः मध्यस्थानो वा रसहरणहेतुः । ननु इच्छन्ती मनसा या माध्यमिका वाक् नित्यम् अभ्यागात् सेयम् अश्विभ्यां द्यावापृथिवीभ्यां सूर्याचन्द्रमोभ्यां वा वर्षाय दुहां दुग्धां प्रक्षरतां पयः उदकम् । अमुना प्रकारेण प्रतिसंवत्सरं वर्धताम् उदकेनास्माकं महते सौभगाय । यथा महत्सौभाग्यं धनैवत्वं स्यात्तथा वर्धतामिति ।

१ क. ख. घ. ड. च ततः त्व°; च. च °त्व° ततः; ठ. ड. च ततः त्वत्प्रसादेन पय°. २ ग. ज. °रन्ती सेव°; च. रन्ती स° आ. ३ क. ख. १० ( ४४ ); ठ. ड. °वति । इति निरुक्तभाष्ये एकादशाध्याये ४४ खण्डः; ग. च. वर्जमितरेष्वत्र न भि. ४ क. ख. ११ ( ४५ ); ग. द. ११. ५ ग. °तीति । पू°. ६ ग. ज. °दार्ध । हिङि°; च. दार्ध । हिङि° श°. ७ ग. ज. कुर्वती°; च. कुर्वती° पं. ८ ग. ज. °भ्यां व°; च. भ्यां व° वा. ९ ठ. °धन° इत्यनन्तरमध्यायस्य पत्राणि नष्टानि. १० ग. ज. °मिति वर्तयामेति; च. °मिति वर्तयामीति.

'पथ्या (३२) स्वस्तिः' (३३) इति वक्तव्यम् । अत्र पूर्वपदं

पथ्या कस्मात्

पन्था अन्तरिक्षम् । तन्निवासात् पथ्या । स्वस्तिरित्युक्तं निर्वचनम् ( निरु० ३ । २१ ) । यथा प्रायणीयायां यजतिप्रयोगो दृष्टस्तथा समाम्नातः[2] 'पथ्यां स्वस्ति[1]पूर्वां यजति' इति । 'तस्या एषा भवति' ॥ ४५ ॥

**स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति । सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ( ऋ० सं० १० । ६३ । १६ ) ॥ स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु स्वावेशा भवतु देवी गोप्त्री देवान्गोपायत्विति देवा एनां गोपायन्त्विति[3] वोषा व्याख्याता तस्या एषा भवति ॥ ४६ ॥**

स्वस्तिरिद्धीति[4] । वसुकर्णस्यार्षम् । 'इत्' इत्यवधारणार्थे ।

स्वस्तिः

स्वस्तिरेव हि प्रपथे अन्तरिक्षे श्रेष्ठा प्रशस्या सर्वदेवताभ्यः । रेक्णस्वती धनवती उदकेन । अभि या वाममेति । या वननीयानि उदकानि अभ्येति । तस्याः किमिति । सा नः मा अस्मान् अमा । अमेति गृहनाम ( निघ० ३ । ४ । ११ ) । गृहे[5] वसतः अरणे अरण्ये च निर्गमने[6] च बहिर्गृहात् पातु रक्षतु । स्वावेशा सुपचरणा भवतु अस्माकम् । देवगोपा देवी चासौ गोप्त्री चेति देवगोपा । देवान्[7] दातॄनस्मान्[8] गोपायत्विति वा । हविषो[9][10] गोपायतु । अथवा । देवा माध्यमिका द्युस्थाना वा रश्मय एनां गोपायन्त्विति वा ।

१ ग. ज. पूर्वार्द्धे; च. पूर्वार्द्ध य °वा. २ क. ख. ११ ( ४५ ); ङ. °वति । इति निरुक्तभाष्ये ५ ध्याये ४५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ३ क. ख. १२ ( ४६ ); त. द. १२. ४ ग. °रिति । व°. ५ क. ख. घ. ट. ठ. ङ. °कानि नित्यमभ्येति; च. °कान्यभ्ये°मत्य. ६ ग. ज. °मणे; च. °मणे च° ने. ७ क. ख. घ. ट. ढ. देवान्गोपायत्विति वा । दातॄनस्मान् । किम् । सर्वस्माद्धविषो गोपायतु । अथ°; च. देवान् गोपा° दातॄ० यत्विति वा. ८ ख. °नस्मान् यैत्विति वा. ९ च. °हवि° किं सर्वस्मात्. १० च. हवि° गोपा° षो.

' उषा ( ३४ ) व्याख्याता ' ( निरु० २ । १८ ) । ' तस्या एषा भवति ' ॥ ४६ ॥

अपोषा अनसः सरत्संपिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद्वृषा ( ऋ० सं० । ४ । ३० । १० ) ॥ अपासरदुषा अनसः संपिष्टान्मेघाद्बिभ्युष्यनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिंश्चीवरमानितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद्वृषा वर्षिता मध्यमस्तस्या एषापरा भवति ॥ ४७ ॥

अपोषा अनसः सरदिति । वामदेवस्यार्षम् । परा च । अपासरदुषाः । उषाः: अपासर्पत् । कुतः । अनसो वायोः । यदा संपिनष्टि वायुर्मेघं तदा तन्निवासिन्युषा मामप्ययं हनिष्यतीति बिभ्यत्यपसरति । नि यत्सीं शिश्नथत् । यदा निरशिश्नथत् निर्जघान निर्हन्ति वृषा वर्षिता वायुः तदा अपासरदुषाः ।

' अनो वायुरनितेः ' धातोः प्राणनार्थस्य । ' अपि वोपमार्थे स्यात् । अनस इव शकटात् । यथा शाकटिकः शकटात्केनचित्संपिष्यमाणादपसर्पेदेवं वायुना संपिष्यमाणान्मेघादपासरदुषा इति द्वितीया कल्पना ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । उत्तमापि ह्युषा आदित्यसंश्रयाद्भवति । इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम् ॥ ४७ ॥

एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससार सीं परावतः ( ऋ० सं० ४ । ३० । ११ ) ॥ एतदस्या अन आशेते

१ क. ख. १२ ( ४६ ); ड. °वति । इति निरुक्तभाष्ये ११ ध्याये ४६ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. १३ ( ४७ ); त. द. १३. ३ ग. °दिति । वा°; ड. अपोषा । इति. ४ च. °मानार्थे. ५ क. ख. १३ (४७); ११ ड. °त्युपप्रदर्शनार्थम् । ४७ । ' इति नास्ति; ग. च. वर्जमितरेष्वङ्को नास्ति.

**सुसंपिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरितवतः परागताद्वेळा व्याख्याता तस्या एषा भवति ॥ ४८ ॥**

एतदस्या अनः शय इति । विशीर्णमुदकभावेन पृथिवीं संश्रय उषा एव अवस्थितं दर्शयन् ब्रवीति मेघम् । एतदस्याः उषसः अनो मेघाख्यमाश्रयभूतं सुसंपिष्टं सुष्ठु संचूर्णितं वायुना इतरदिव शकटानः विपाशि छिन्नसर्वपाशबन्धनम् आशेते आतत्य पृथिवीं शेते आस्ते यतः संपिष्यमाणात् ससार माध्यमिका उषाः परावतः दूराद्दूरतरं ननाशेति ।

'इळा ( ३५ ) व्याख्याता ' 'इळेः स्तुतिकर्मणः ' ( निरु० ८.७) इति । ' तस्या एषा भवति ' ॥ ४८ ॥

**अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ( ऋ० सं० ५ । ४१ । १९ ) ॥ सिषक्तु न ऊर्जव्यस्य पुष्टेः ( ऋ० सं० ५ । ४१ । २० ) ॥ अभिगृणातु न इळा यूथस्य माता स्मदभि नदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टे रोदसी रुद्रस्य पत्नी तस्या एषा भवति ॥ ४९ ॥**

१ क. ख. छ. त. द्. °थला. २ क. ख. १४ ( ४८ ), त. द. १५. ३ ग. हति । ति; ङ. एतदस्या इति. ४ क. ख. ग. च. ष. ज. इला. ५ क. ख. १४ ( ४८ ); ङ. °षाति । इति भाष्ये ५ [illegible] ४८ खण्डः; ग. ष. वर्जमितरेष्वङ्को नास्ति. ६ क. ख. छ. त. द्. इला. ७ क. ख. ङ. थ. ध. ड. माता सर्वस्य माता स्म°. ८ क. ख. ङ. थ. ध. ड. °[illegible] °. ९ क. ख. १५ ( ४९ ), त. द. १५.

अभि न इळेति । अत्रेरार्षम् । शक्करी । अभिगृणातु अभिशब्द-यत्वस्मान् । कासौ । इळा । किंलक्षणा । यूथस्य माता मेघयूथस्य निर्मात्री मध्यमा । केनाभिगृणातु । नदीभिः नर्दनाभिरद्भिः । उर्वशी वा । उर्वशीति वा योच्यते इडेति वा सा गृणातु नः अस्मानिति अभिस्तनयतु । उर्वशी वा बृहद्दिवा गृणाना । उपमार्थे वा 'न' शब्दो भेदापेक्षया । उर्वशीव बृहत् महत् गृणातु दिवा द्योतनवता विद्युत्सहितेनोदकसमूहेन अभ्यूर्ण्वाना सर्वमिदमभिप्रच्छादयन्ती प्रभृतस्य प्रकर्षेण संभृतस्य आयोः अयनस्य गमनशीलस्य उदकस्य समूहेन सिंचतु सेवताम् अस्मान् ऊर्जव्यस्य पुष्टेः यवादेः अन्नस्य पोषणाय ।

रोदसी कस्मात् 'रोदसी (३६) रुद्रस्य पत्नी' रुद्रस्य विभूतिः । 'तस्या एषा भवति' ॥ ४९ ॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे । आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी (ऋ० सं० ५।५६।८) ॥ रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ ५० ॥

१ क. ख. ग. घ. च. ञ. ट. इळेति । अ°. २ ग. ज. °णातु इति अभि°; घ. °णातु इति अभि°. ३ क. ख. ग. घ. च. ज. इळा. ४ ग. ञ. °नद्याभि°; च. °नर्दाभि° इना. ५ ग. ज. उर्वश्यर्थं, घ. उर्वश्यर्थं पमा. ६ क. ख. घ. ढ. ड. °हेन गृणाना शब्दयन्ती अ°; च. °हेन अ° गृणाना शब्दयन्ती ७ क. ख. १९ (४९); ड. °पाति । इति नैरुक्तोत्तरषट्के भाष्ये ७ ध्याये ४९ खण्डः; ग. घ. जनेष्वितरेष्वयं नास्ति. ८ छ. ञ. द. 'मंघं' नास्ति. ९ क. ख. १६ (५०); ग. ड. १६; ड. ५० इति नैरुक्तोत्तरषट्के पञ्चमाध्यायः समाप्तः.

रथं[1] नु मारुतमिति । श्यावाश्वस्यार्षम् । आग्निमारुते विनियोगः । स्तोता ब्रवीति । नु क्षिप्रं वयं रथम् आहुवामहे आह्वयामहे मारुतं[2] मरुत्संयुक्तं श्रवस्युं श्रवणीयं यशस्विनम् । किमिति[3] । आ यस्मिन् तस्थौ । येस्मिन्नातिष्ठति रोदसी रोदसी

रंहणे[4] रोदसी सह[5] मरुद्भिः सहिता मरुद्भिः । रोदसी किमिति । सुरणानि सुष्ठु रमणीयानि उदकानि बिभ्रती धारयन्ती आतिष्ठति । तं वयं मेवं रथम् आह्वयामह वर्षार्थमिति[7] ॥ ५० ॥

इति श्रीजम्बूमार्गनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋगर्थायां निरुक्तवृत्तौ षोडशोऽध्यायः[8] ।

---

+[9] श्येनमादायस्वादिष्ठयासोमंमन्यतेयत्त्वांदेवनवोर्नवोपरंमृत्यो स्त्वेर्षमित्थाश्वोमहउदुर्ज्योतिधाति दद्रातुसोमस्यराज्ञोथातोमध्यस्था-नांदेवगणाआविद्युन्मद्भिरारुद्रासोत्रिष्टुभीसमीविरूपासउदीरतामङ्गिर-सोनःसूर्यस्येवस्तुपेयमथातोमध्यस्थानाःस्त्रियोदक्षस्यदायैस्मैत्वांकि-मिच्छन्तीपार्वं स्तानोमहोअ गौयद्वाग्वदन्तीदेवींवाचमन्विदनुमतेरा-काअहंसिनीवालिकुहूमहमन्यमूपूर्वशीविद्युन्नवाळित्येन्द्राणींनाहमि-

१ ग. °मिति । श्या°. २ ग. ज. मारुतं वा म°; च मारुतं वा म°. ३ क. ख. घ. ट. ड. यस्मिन् किमिति; च. ˇ कि° यस्मिन्. ४ घ. ठ. ड. °स्थौ यस्मिन्नातस्थौ यस्मि°; च. °स्थौ ˇ य° यस्मिन्नातस्थौ. ५ क. ख. घ. ठ. ड. °णे गमने रो°; च. °णे ˇ रो° गमने. ६ क. ख. घ. ट. ड. सचा सह; च. ˇसह° सचा. ७ क. ख. १६ (५०); ड. °मिति । इति श्रीजम्बू°; ग. घ. वर्षामितरेष्वङ्को नास्ति. ८ ग. च. ज. जम्बू०. ९ ड. निरुक्तटीकायां निघण्टव्याख्यानाङ्केन सह नैरुक्तषोडशो°. १० क. ख. च. ज. ड. °ध्यायः समाप्तः. + छ. त. द. एषा खण्डशृङ्खला नास्ति. ११ ड. श्येनो व्याख्यात आदा°. १२ क. ड. °तमवरोहि°. १३ थ. यद्वाग्वदेवीं. १४ थ. राकांसिनी. १५ थ. कुहूमन्यमू°. १६ थ. नियुद्भि°. १७ थ. नाहं गौरी°.

न्द्राणि गौरी[४७]र्मिमाय तस्याः स[४८]मुद्रा गौ[४९]री मिमेदु प[५०]द्धये सू[५१]र्यं वसा[५२]द्धिं क्र[५३]न्द्र-
तीस्त्वास्ति रि[५४]द्धे षपो[५५]षौं एतं[५६]दस्या अ[५७]मिनइळा रथं[५८]नु पञ्चाशत्[१]।

इति निरुक्त उत्तरषट्के पञ्चमोऽध्यायः[२]।

१ थ. °रिद्पो°. २ छ इति नैरुक्ते एकादशोऽध्यायः; स. द. इत्येकादशमोऽ-
ध्यायः समाप्तः; ध. इति नैरु० ह. 'इति० ध्यायः' नास्ति.

## अथ द्वादशाध्यायस्य

### प्रथमः पादः ।

ॐ[1] ॥ अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोऽश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विना·वित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकास्तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यस्तयोरेषा भवति ॥ १ ॥

व्याख्याता[3] मध्यस्थाना देवताः सवचनलिङ्गविशेषाः । अधुना तेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः । तदर्थं विशेषतः पुनरधिकारवचनम् । ‘ अथातो द्युस्थाना देवताः ’ इति । बहुवचनं[4] पक्षेऽर्थवत् । द्यौस्तेषां स्थानमिति द्युस्थानाः । देवता व्याख्यास्यन्त इति शेषः । ‘तासामश्विनौ प्रथमागामिनौ भवतः ’ । तौ कस्मात् । कालतो हि द्युस्थानानां देवतानां विशेषो विवक्षितः । आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः संधौ । एकश्चाश्वी मध्यस्थान एको द्युस्थानो नैरुक्तानाम् । अतो द्युस्थानमध्ये[5]स्थानत्वात्तयोरश्विनोरुपन्यासः । यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति । न । एकैकस्य[6] तयोरश्विशब्दस्य पृथग्भावेन स्तुत्यभावादश्विद्वन्द्वस्य चात्यन्तमवियोगान्नासत्याविति च पृथक्स्तुत्यभावात् । सत्यप्यै[7]वियोगे प्राथम्यात्प्रथमस्य समाम्नानं[8] युक्तमिति चेन्न तत्कालेन मध्यस्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य च वर्धमानरूपत्वात् अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसंस्थानादिति ।

अश्विनौ किमर्थं प्रथमं कथ्येते

द्वयोरेकत्र कथने किं कारणम्

१ ङ. ढ. हरिः ओम्; छ. नुं; थ. ओ३म् ; ध. ॐम्. २ छ. त. द. ढ. °नुत्तमो. ३ ग. च. ज. नुं व्या°; ब. ट. श्रीगणेशाय नमः । व्या° ४ ग. ज. °चनपक्षे°. ५ च. मध्यस्था° म. ६ च. ट. °कस्यैं तयोराश्वि° स्या. ७ ग. ज. ‘अपि’ नास्ति ८ ग. ज. °म्नातं.

'अश्विनौ '( निघ० ५ । ६ । १ ) कस्मात् । 'यद्व्यश्नुवाते सर्वम्' । केन ।

अश्विनौ कस्मात् 'रसेनान्यः '। रसेनोदकेन सर्वम् व्यश्नुते व्याप्नोति । ज्योतिषैकः । ' अश्वैरश्विनावित्यौर्णवाभः' । अश्वैस्तद्वन्तौ तावित्यौर्णवाभ आचार्यो मन्यते ।

' तत्का अश्विनौ ' इति विचारः । तदिति वाक्योपादाने । कावेतावश्विनाविति विचारार्थः प्रश्नः ।

कौ अश्विनौ ' द्यावापृथिव्यावित्येके ' । विज्ञायते हि ' तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव ते द्यावापृथिव्यौ ' इति । द्यौर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन । ' अहोरात्रावित्येके ' । अहर्ज्योतिषा व्यश्नुते रात्रिस्तमसा । ' सूर्याचन्द्रमसावित्येके ' । सूर्यो ज्योतिषा व्यश्नुते रसेन चन्द्रमाः । ' राजानौ पुण्यकृतावित्यैतिहासिकाः ' । ' अश्वैरश्विनौ ' इत्येतन्निर्वचनमथास्मिन्पक्षे इतिहासे समवैति ।

' तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम् ' । ज्योतिषा

तयोः कालः व्यतिभिद्यमानमूर्ध्वमर्धरात्रात्तमो यदा ज्योतिरनुविष्टभ्नाति सोऽश्विनोः कालः । ततः प्रभृति संविस्तोत्रं पुरोदयौदाश्विनम् । उदिते सौर्याणि । तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागो मध्यमस्य रूपम् । यज्ज्योतिस्तमस्यनुप्रविष्टं तद्भागं तद्रूपम् ' आदित्यः '। तावेतौ मध्यमोत्तमाविति स्वमतमाचार्यस्य । यतः समर्थनायोदाहरति । ' तयोरेषा भवति ' ॥ १ ॥

---

वसातिषु स्म चरथोऽसितौ पेत्वाविव । कदेदमश्विना युवमभि देवाँ अगच्छतम् ॥ इति सा निगदव्याख्याता तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति

१ क. ख. घ. ट. ग. ड. °केन सर्वं व्य°; च. °केन ˇ व्य° सर्वं. २ ग. ज. यावाश्वि°; च. °यावौश्वि दा. ३ क. ख. घ. ट. ठ. ड. मध्यमः । तन्मध्यमस्य; च °गो मध्य° ध्यमः । तन्म°. ४ ठ भवति । इति नि० निघण्टपं० १ खण्डः; ड. °वति । इति निरुक्तटीकायां निघण्टपञ्चकेन सह सप्तदशाध्याये प्रथमः खण्डः; क ख. ग च. वर्जमितरेष्वङ्को नास्ति. ५ क. थ. घ. ठ. ड. °स्यात । वसातिषु स्म च रथो वसातयो रात्रयो वसन्ते स्म इत्येतया तयो वचेवा कहते- वासितौ पेत्वाविव । अत्र वृत्रहणं सुगतयोस्तयोः°.

**वासात्यो अन्य उच्यत उषःपुत्रस्तवान्य इति तयोरेषापरा भवति ॥ २ ॥**

अश्विनौ

वसातिषु [1]ष्मेति । उपजातदेवतादर्शनचक्षुरलीतेषु रात्रिपर्यायेषु संधौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृगब्रवीति । वसातिषु रात्रिषु । तासु हि प्राणिनो वसन्ति । किं तास्विति । चरथो युवाम् । कथम् । असिताविव पेत्वौ । कृष्णाविव मेघौ समानरूपौ । उषसि कथमपि मया लक्षितौ । यतो ब्रवीमि । कदेदमश्विना युवम् । कदेदमस्मत्कर्म प्रति ये देवा आगतास्तान्प्रति हे युवामश्विनौ आगच्छतम् आगतवन्तौ स्थः ।

तयोः कालः कर्म च समाने सूक्तानि ऋचश्च प्रायः स्तुतिरूपाणि असंस्तवरूपोऽर्धर्चः

' तयोः ' अश्विनोः ' समानकालयोः ' । उभयोरपि हि तयोरूर्ध्वमर्धरात्रात्काल इति समानः काल: । ' समानकर्मणोः ' । उभयोरपि तयोरेकं कर्म । तिरोअह्न्याः सोमा आश्विनश्च द्विकपालः । ' संस्तुतप्राययोः ' । प्रायेण हि तयोर्बाहुल्येन संस्तव एव । तयोः पुनः ' असंस्तवेनैषोऽर्धर्चो भवति ' ।

नायमर्धर्चोऽश्विपर इति केचित्

ननु त्वस्यामृचि वसातिषु स्म चरथ इति वसातयो हि जनपदा अपि प्रसिद्धाः । तदधिपती राजानौ पुण्यकृतौ अश्वैस्तद्वन्ताविति शक्यते कल्पयितुम् । तद्यथा । वासात्यौ तद्देशाधिपती कौचिद्राजानौ बह्वश्वौ पुण्यकृतौ यज्ञकर्मणि देवान्प्रति गतौ केनचिदुच्येते । यौ युवां वसातिषु जनपदेषु नित्यमसिताविव पेत्वौ समानवेषौ चरथस्तौ युवामिदं देवस्थानं प्रति ये देवा वर्तन्ते तान्प्रति कदा हे अश्विनौ युवामागच्छतमागतवन्ताविति । मा भूदेषा मन्त्रार्थयोजनेत्यत आह । ' वासात्यो अन्य उच्यत उषः-

१ ग. ष्मेति । उ°; ज. ष्मेति । उ°. २ क. ख. घ. ट. ठ. ड. निव°. ३ क. ख. घ. ट ठ. ड. °वीति. ४ ग. ज. °मानः का°. ५ ग. ज. ' ननु ' नास्ति. ६ ग. ज. 'तिशु ष्म च°; 'तिशुं ष्मं च' षु स्म. ७ क. ख. घ. ट. ठ. ड. पुण्यकृतौ राजानौ. ८ क. ख. घ. ट. ठ. ड. युवामागतव°. ९ क. ख. घ. ट. ठ. ड. °त्योऽन्य°.

अश्विपरोऽर्थः

पुत्रस्तवान्ब इति ’ । एको वासात्य उच्यत एकश्च उषसः पुत्र इति । एवमेतस्मिन् भिन्नस्तुतावर्धर्चे उषसः पुत्रेण सूर्येण सह समानख्यानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ।

‘ तयोरेषापरा भवति ’ । सा पुनः किमर्थम् । मध्यमो[2]त्तमावश्विनावित्यस्यैवार्थस्य दृढतार्थे स्फुटं यदेतस्यामेतत्परस्यामृचि ॥ २ ॥

**इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ( ऋ० सं० १ । १८१ । ४ )॥ इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वै[4]र्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र [6]ऊह्यत आदित्यस्तयोरेषापरा भवति ॥ ३ ॥**

---

इहेह जातेति । अगस्त्यस्यार्षम् । प्रातरनुवाकाश्विनयोर्विनियोगः ( आश्व० श्रौ० ४ । १५ ) । हे अश्विनौ युवामुच्येथे । इहेह जातौ

अश्विनौ

इहं च मध्यस्थाने इह च द्युस्थाने जातौ समवावशीतां संस्तूयेथे । केन । अरेपसा तन्वा अपापया तन्वा यथासंकल्पकृतया नामभिः स्वैः । परमनाश्रित्य यानि स्वैर्निमित्तानि तैः । किंच । जिष्णुर्वामन्यः । नित्यमेव जेता युवयोरन्यः । सुमखस्य सूरेः सुमहतो बलस्येरयिता शत्रुषु । स च नान्यो मध्यस्थानादिति मध्यस्थानः । दिवो अन्यः सुभगः पुत्रः सुभगः सुधनः ऊहे उह्यते वायुना नित्यम् । स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ।

१ क. ख. घ. ट. ठ. ड. °मानख्यात्या°. २ ठ. ड. °मृचि । इति निरुक्तभाष्ये ३ ध्याये २ खण्डः; क. ख. ग. च. वर्गाभितरेण्वङ्को नास्ति. ४ छ. त. सुमहतो महतो बल°. ५ क. ख. छ. त. द. दिवो अन्यः. ६ क. ख. ङ. थ. ध. ठ. ड. ऊह्य. ७ ग. °तेति । अ°. ८ क. ख. घ. ट. ठ. ड. °ल्पतया; च. °ल्पकृत°. ९ क. ख. घ. ट. ठ. ड. स्वस्तुतिनि°; च. स्व॰नि° स्तुति. १० क. ख. घ. ट. ठ ड. ऊह्य°.

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । संस्तुतप्रायावेतौ[1] समानकालौ समानकर्माणावित्युक्तं तदुपप्रदर्शनार्थम् ॥ ३ ॥

प्रातर्युजा विबोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ( ऋ० सं० १ । २२ । १ ) ॥ प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय तयोरेषापरा भवति॥४॥

प्रातर्युजेति[2] । मेधातिथेरार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४।१५ ) । हे स्तोतः यावेतौ प्रातर्युज्येते हविषा स्तुत्या च । तावेतौ अश्विनौ विस्पष्टाभिः स्तुतिभिरस्मदर्थं विबोधय । विबोधितौ च त्वया इह कर्मणि आगच्छताम् अस्माकम् अस्य सोमस्य पीतये पानाय ॥

तौ एव

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । नैवानयोरन्यस्मिन् काले इज्यास्ति । यद्यपि क्रियतानिज्यैव सेति सुतरां परया संस्तवं कालं चोपप्रदर्शयति[3] ॥ ४ ॥

---

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् । उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ( ऋ० सं० ५ । ७७ । २ ) ॥ प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतदप्यन्योऽस्मद्यजते[4] वि चावः पूर्वः पूर्वो यजमानो वनीयान्वनयितृतमस्तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्त उषा[5] वष्टेः कान्तिकर्मण उच्छतेरितरा माध्यमिका तस्या एषा भवति ॥ ५ ॥

१ ठ ढ. °नार्थम् । इति निरुक्तभाष्ये षष्ठाध्याये तृतीयः खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति. २ ग. °जेति । मे°. ३ ठ. ढ. °यति । इति निरुक्तभाष्ये ६ध्याये ४ खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति. ४ क. ख. छ. त. द. °प्यन्यो अस्म°. ५ छ. त. द. उष°.

प्रातर्यजध्वमिति । अग्नेरार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १५ ) आश्विने च ( आश्व० श्रौ० ६ । ५ ) । हे स्तोतारो यूयमुच्यध्वे । तौ अश्विनौ प्रातः एव यजध्वम् । कथमिति । यतो ब्रवीमि । प्रहिणोत प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति । किमित्येवं ब्रवीति प्रातर्यजध्वमिति । इतो यस्मात् न सायमस्ति देवयाः । अनयोर्देवयोर्न सायमस्ति इज्या । यद्यपि कथंचित्स्यात् अजुष्टम् अनासेवितं च तदश्विभ्यां कर्म । उतान्यो अस्मद्यजते । अपि च अनादृते त्वयि अन्यैः अस्मत्त एतावश्विनौ यजते । वि च आवः । व्याश्रयति च तर्पयति हविर्भिः । पूर्वः पूर्वो यजमानः प्रथमः प्रथमो यजमानो वनीयान् वनयितृतमः संभक्तृतमः आदृतत्वात् । तस्यैव हविरासेवेते अश्विनौ नेतरस्येति ।

**तौ एव**

'तयोः कालः सूर्योदयपर्यन्तः' । 'प्रकाशीभावस्यानु विष्टम्भम्' ( निरु० १२ । १ ) इत्यतः काल प्रभृति सूर्योदयपर्यन्तस्तयोः कालः । ततःपरं यागकालः । ततः किम् । 'तस्मिन्नन्या देवताः' । तस्मिन् स्तुतिकालेऽन्या देवता आश्विने शस्त्रे याः स्तुतिं लभन्ते ताः 'ओप्यन्ते' तासामावापस्तत्कालस्तुतिप्रतिलम्भे इति । तत्र तावदुषाः प्रथममोप्यते । तद्देवतानि सूक्तानि शस्यन्ते ।

**आश्विने काले अन्यासां देवतानामावापः**

**तासु उषाः प्रथमा**

' उषा ( २ ) वष्टेः कान्तिकर्मणः ' । ' वश कान्तौ ' ( धा० २ । ७० ) इत्यस्य । यच्चोक्तम् ' उच्छतीति सत्याः' ( निरु० २ । १८ ) इति तद्धदं विकल्पेन द्युस्थानायाः । या पुनः ' इतरा माध्यमिका ' उषा न तस्या विकल्पः । किं तर्हि । ' उच्छतेः ' एव सा विवासनार्थस्य । उदकानि विवासयति विवास्यते वा मेघान्मध्यमेनेति । ' तस्या एषा भवति ' ॥ ५ ॥

**उषाः कस्मात्**

१ ग. ज. प्रातरेतावश्विनौ य°; ष. प्रातरेतावश्विनौ य°. २ क. ख. घ. ट. ठ ह. 'च' नास्ति. ३ ग. ज. °न्योऽप्यस्म°. ४ घ. ट. °तस्वत्. ५ ग. ज. °सेवितौ श्विनौ; ष. सेवितोऽश्वि° ते अ. ६ ग. ज. उप्य°; ष. उप्य° ओ. ७ ग. ष. ज. °थमोप्य°. ८ ठ. ह. °वाति । इति निरुक्तभाष्ये द्वाध्याये ५ खण्डः; क. ख. ग. ज. वर्जमितरेष्वङ्को नास्ति.

२१

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ( ऋ० सं० १ । ९५ । १३ ) ॥ उषस्तच्चित्रं[1] चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि तस्या एषापरा भवति ॥ ६ ॥

---

उषस्तच्चित्रमा भरति[2] । गोतमस्यार्षम् । प्रातरनुवाके[3] ( आश्व० श्रौ० ४ । १५ ) आश्विने ( आश्व० श्रौ० ६ । ५ ) च विनियोगः ।

उषाः

हे उषः[4] तदस्माकं चित्रं चायनीयं धनम् आहर त्वं येन त्वत्प्रत्तेन वयं पुत्रांश्च पौत्रांश्च अविच्छेदेन सृतान् दधीमहि ।

' तस्या एष परा भवति ' । सा पुनः किमर्थम् । पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तम् । तच्च पुनरुभयोरप्युषसोराविशिष्टम् । विशिष्टं तु परस्यामुक्तमलिङ्गं ' पूर्वे अर्धे रजसो भानुमञ्जते ' इति । अतः परोदाह्रियते[5] ॥ ६ ॥

---

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ( ऋ० सं० १ । ९२ । १ ) ॥ एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात्[6] पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने[7] एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो

१ छ. त. द. °हाच्चायनीयं धन°. २ ग. °रेति । गो°. ३ ग. ज. °वाके वि°; च. °वाके ॥ वि° आश्विने च. ४ क. ख. थ. ट. ठ. ढ. उषः वाजिनीवति त°; च. उषः ॥ त° वाजिनीवति. ५ ट. ढ. °यते । इति निरुक्तभाष्ये ६ ध्याये ६ खण्डः; क. ख. ग. ज. वर्जमितरेष्वङ्को नास्ति. ६ क. ख. द. °स्पूर्वे अर्धे अन्त°; त. °स्पूर्वेर्धे अन्त°. ७ क. ख. छ. त. द. स्थाने । एमी°.

**भासो निर्मार्ज्यः सूर्या सूर्यस्य पत्न्येषैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ७ ॥**

एता उ त्या इति । पूर्ववदार्षं विनियोगश्च । याः पूर्वे अर्धे अन्तरिक्षलोकस्य समञ्जते भानुना भासा आत्मानं सैव समभिव्यञ्जयन्ति । एतास्ता उषसः । किमिति । केतुमकृत अकृषत कुर्वन्ति लोकस्य प्रज्ञानम् । कथं ताः प्रज्ञानं लोकस्य कुर्वन्ति । अत आह । निष्कृण्वाना आयुधानीव धृष्णवः । 'निरित्येष समित्येतस्य स्थाने' । यथा संस्कुर्वाणाः नित्यं निर्मृजन्तः आयुधानि निर्मलानि कृण्वन्ति धृष्णवः धर्षयितारः ते आयुधिनस्तज्जीवना एवं भानुना स्वेन भासा तमोमलमपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः संस्कुर्वन्ति । ततश्च प्रति गावोऽरुषीर्यन्ति मातरः । यत एवोदितास्तमेव सूर्यं प्रति यन्ति तत्रैवान्तर्धीयन्ते । सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते । ता उषस इत्याचक्षते । स एष परमार्थः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति सूर्यकार्यत्वात्प्रकाशस्य ।

'एकस्या एव पूजनार्थे बहुवचनम्' इति वचनभेदप्रतिसमाधानम् ।

निरित्येष समित्येतस्य स्थाने — 'निरित्येष समित्येतस्य स्थाने' सामर्थ्याद्व्यत्ययः । संस्क्रियमाणानि ह्यायुधान्यतिनिर्मलानि भवन्ति ।

यथा चोपपद्यते उपसर्गव्यत्ययस्तथा निगममुदाजहार । 'एमीदेषाम्' इति । 'यदादीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः । न्युप्ताश्च तस्योदाहरणम् बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव' ( ऋ० सं० १० । ३४ । ५ ) ॥ कवषस्य बाक्षस्य वार्षम् । कृतनिवृत्तिर्देवनादशक्नुवन्नात्मानं धारयितुं ब्रवीति ।

१ छ. °भिविसृ°. २ ग. इति । पू°. ३ ग. च. ज. °र्धेऽन्त°. ४ क. ख. घ. ट. ठ. ड. °नमभि°. ५ क. ख. घ. ट. ठ. ड. °न्तर्लीय°; च. °र्धी° ली. ६ ग. °पाणीति । कव°; ज. °षाणीति । कव°; घ. ठ. °षाण्येभिः । कव°.

यदा दीध्ये भृशमभिध्यायामि निश्चयेन न दविषाणि न देविष्यामि एभिः अक्षैरिति अथ तदा सखिभ्यः समानख्यानेभ्यः कितवेभ्यः परायद्भ्यः परागच्छद्भ्यो देवनस्थानम् अहमेभ्यः अवहीये भृशं हीनोऽस्मीति । यदा च पुनस्ते प्राप्य आस्फारं निवपन्ति अक्षान् अथ पुनस्तदा तैर्युताश्च ते बभ्रवः बभ्रुवर्णा अक्षा वाचमक्रत शब्दमकुर्वत । अथ तदा निवृत्तिमविग॰ णय्य एमीत् आगच्छाम्येव एषाम् अपेषाम् अपेवं निष्कृतं संस्कृतमक्ष॰ स्थानम् आस्फारं संस्कृतं जारिणीव व्यभिचारिणीव काचित्स्त्री चारित्र॰ मात्मनोऽविगणय्येति ।

' सूर्या ' ( ३ ) इति वक्तव्यम् । सा पुनरियं ' सूर्यस्य पत्नी

का सूर्या — ' एवैव ' उषा ' अभिसृष्टकालतमा ' । यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति गततमा भवति तथा तथा सैषा उषाः सूर्या संपद्यते । ' तस्या एषा भवति ' ॥ ७ ॥

---

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ( ऋ॰ सं॰ १० । ८५ । २० ) ॥ सुकाशनं शल्मलं सर्वरूपमपि वोपमार्थे स्यात्सुकिंशुकमिव शल्मलिमिति किंशुकं क्रंशतेः प्रकाशयतिकर्मणः शल्मलिः सुशरो भवति शरवान्वारोह सूर्ये अमृतस्य लोकमुदकस्य सुखं पत्ये वहतुं कुरुष्व सवि॥ सूर्या प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणं वृषाकपायी वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ८ ॥

सुकिंशुकं शल्मलिमिति । सूर्याया आर्षम् । विवाहे विनियोगः

सूर्या — ( आश्व॰ गृ॰ १ । ८ । १३ ) । त्रिर्वै तावदुच्यते । यानेव विनियुज्य प्रभागात्मनो

१ ग. ज. °ष्याण्येभि°; च. 'ष्याण्येभि° ण्ये; ट. 'ष्याम्येभि° ण्वे; ठ. ह. 'ष्याण्येभि°. २ ग. °प्याःस्फारं; ज. °प्य स्फुरं. ३ क. ख. घ. ट. ठ. ह. °चिद्दुः॰ स्त्री; च. °चित् स्त्री° दुः ४ ठ. ह. °वति । इति निरुक्तभाष्ये उत्तरषट्के षष्ठा॰ ध्याये सप्तमः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ५ ग. 'मिति । सू°; ठ. ह. सुकिंशकमिति. ६ क. ख. घ. ट. ठ. ह. °च्यते प्रभा°; ग. ज. या प्रभा°.

विभजते तदधिदेवतां ब्रवीति। सुकिंशुकं सुष्ठु काशनं दीपनं लोकानां शल्मलिं शान्तमलं व्यपगतमलं विश्वरूपं सर्वरूपं हिरण्यवर्णं हिरण्योपमवर्णं हिरण्यमिव वैरणीयं सुवृत सुवर्तनं शोभनैर्वा रश्मिभिर्वृतं सुचक्रं सुचकनं सुदीप्तम्। एवमेवंलक्षणं मण्डलं रथम् आरोह त्वं हे सूर्ये अमृतस्य उदकस्य लोकं स्थानम्। तत एवमधिरुह्य स्योनं सुखम् एतस्मै पत्ये मण्डलाधिष्ठात्रे वहतुं कृणुष्व कुरुष्वेति।

पृथक्त्वपक्षे तु रथ एव रथः सूर्यं ऊढो वा कन्या सूर्योच्यते। एवंलक्षणं रथमारोहेति।

'अपि वोपमार्थे स्यात्। सुकिंशुकमिव शल्मलिमिति'। किंशुकमिति पलाशपुष्पे प्रसिद्धिः। इह तु रक्तपुष्पत्वसामान्यात्सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्पतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः।

सुकिंशुकमित्यादि रथविशेषणम्। अथवा उपमार्थे स्यात्

' किंशुकं क्रंशतेः ' धातोः प्रकाशनार्थस्य। तद्धि दीप्तिमद्भवति। ' शल्मलिः सुशरो भवति '। ' शॄ हिंसायाम् ' ( धा० ९। १६ ) इत्यस्य धातोः। स हि मृदुत्वात्सुहिंस्यो भवति। ' शरवान् वा '। कण्टकैरसौ हिनस्ति हिंसायाम्। ' सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम्'। नैरुक्तपक्षे ज्योत्स्नां सोमाय ददाति। यदुक्तम्। ' आदित्यतोऽस्य दीप्तिर्भवति ' ( निरु० २। ६ ) इति। ' प्रजापतये वेति '। उषसं वा मध्यस्थानाय प्रजापतये ददाति। केचित्त्वैतिहासकपक्षे इच्छन्ति। तेषामितिहासं शृणु कथमेतदिति।

ब्राह्मणवचनस्य नैरुक्तपक्षेऽर्थः

१ क. ख. घ. ट. ठ. ड. विभज्य; ग. ज. विभज्यते. २ ग. ज. वार°; च. वारिणी° वैरम; ठ. ड. रमणीयं. ३ ग. च. ज. 'पत्ये वहतुं मण्डलाधिष्ठात्रे कृ°. ४ क. ख. घ. ट. ठ. ड. ' इति ' नास्ति. ५ ठ. ड. 'ऊढा। पत्ये सोमायेत्यादि। कन्या° ( ट. च. पुस्तके इद प्रान्ते लिखितम् ). ६ घ. ट. ठ. 'समायोग. ७ क. ख. घ. ट. °वान्वा। हिंसावान्। क°. ८ क. ख. घ. ट. ठ. ड. हि; च. हिंसायां. ९ क. ख. घ. ठ. ठ. ड. निरु°. १० ग. °हासो मूयं; च. °हासं सोम्मूयेः शृणु; ज. °हासो मूय। क°.

का वृषकपायी

'वृषाकपायी (४) वृषाकपेः पत्नी'। वृषाकपिरादित्यः। तस्य पत्नी तद्विभूतिः उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात्। सा पुनः 'एवैव' सूर्या 'अभिसृष्टकालतमा' वृषाकपायीत्युच्यते। 'तस्या एषा भवति'॥ ८॥

**वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे। घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०। ८६। १३)॥ वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा स्नुषा साधुसादिनीति वा साधुसानिनीति वा स्वपत्यं तत्सनोतीति वा प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकान्त्संस्त्यायानुक्षण उक्षतेर्वृद्धिकर्मण उक्षन्त्युदकेनेति वा प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यं सरण्यूः सरणात्तस्या एषा भवति॥ ९॥**

---

वृषाकपायी

वृषाकपायि रेवतीति। इन्द्रस्यार्षम्। षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः (अश्व० श्रौ० ८। ३)। हे वृषाकपायि रेवति रयिमति धनवति। सुपुत्रे मध्यमेन इन्द्रेण रसहरणसामान्यात्सहस्थानसामान्यात्। सुस्नुषे माध्यमिकया वाचा मिथुनसामान्यात्। किमिति। घसत्त इन्द्र उक्षणः। प्राश्नातु ते इन्द्रः तव स्वभूतान् एतान्माध्यमिकान् उक्षणः अवश्यायसंस्त्यायान् एष इन्द्र आदित्यः। स हि तानुद्यन् पिबति। प्रियम् इष्टम् एतत्काचित्करं हविः। कमिति सुखनाम। तस्य यत् आचितम् आचयनं करोति तद्भवति काचित्करम्। किं पुनस्तत्। हविः उदकम्। तत्कुरुष्वावश्यायलक्षणं हविः। अन्नमवश्यायैरभिनिष्पादय। किमर्थम्। विश्वस्मात् य एष इन्द्र आदित्यः उत्तरः तदर्थमिति।

---

१ ग. ज. °पत्नी ऽषःकाले°; च. तद्विभूति. २ घ. ट. ठ. ड. कम्पाति. ३ ठ. ड. °वति। इति निरुक्तभाष्ये ६ ध्याये ८ खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. द. 'हविः सुखकरं' नास्ति. ५ ग. 'तीति°। इ°. ६ क. ख. घ. ट. ठ. ड. धनवति रयिमति. ७ ग. ज. तदर्थमिति उत्तरः; च. °तदर्थमिति °त्तरः उत्तरः.

'स्नुषा साधुसादिनीति वा साधुसानिनीति वा'। संतानलक्षणे

**स्नुषा कस्मात्** सीदति अङ्गभावमुपैति[1] स्नुषा। साधु सनोति संततिं संभजतीति वा स्नुषा। 'स्वपत्यं तत्सनोतीति वा' स्नु इत्यपत्यनाम प्रसूयते हि तदिति। तदिदं श्वशुरस्य सनोति संभजतीति वा स्नुषा। उक्षणः उक्षतेः वृद्धयर्थस्य। वर्धयन्ति हि ओषधीरवश्यायाः। त एव वा बहुत्वाद्वृद्धा भवन्ति। उक्षतेर्वा सेचनार्थस्य। 'उदकेन' अवश्यायाः सर्वमिदं सिञ्चन्ति।

'सरण्यूः' (५) इति वक्तव्यम्। सैव यदा सूर्यं प्रति अविभागेन

**सरण्यूः कस्मात्** प्रसूता भवति तदा 'सरणात्' सरण्यूरित्युच्यते। 'तस्या एषा भवति'॥ ९॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते। उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः (ऋ० सं० १०। १७।२)॥ अप्यगूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वतेऽप्यश्विनावभरद्यत्तदासीदजहाद् द्वौ मिथुनौ सरण्यूर्मध्यमं च माध्यमिकां च वाचमिति नैरुक्ता यमं च यमीं चेत्यैतिहासिकास्तत्रेतिहासमाचक्षते त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयांचकार सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य संबभूव ततोऽश्विनौ जज्ञाते सवर्णायां मनुस्तदभिवादिन्येषर्ग्भवति॥ १०॥

१ क. ख. घ. ट. ठ. ढ शोभनेऽर्थे श्वशुरस्य संता°; च. ˇ संता° शोभनेऽर्थे श्वशुरस्य. २ क. ख. घ. ट. ठ. ढ. °पैतीति स्नु ; च. पै ˇ नि° ती. ३ च. सु° सू. ४ क. ख. घ. ट. ठ. ढ. हि ते ओ°; च. हि ˇ ओ° ते. ५ क. ख. सूत प्रसूत ; घ. ट. ठ. ढ. सूता भ;° च. ˇ प्रसू° सूता. ६ ठ. ढ. °वति। इति निरुक्तभाष्ये ८ध्याये १ खण्डः क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ७ छ. त. दृ. अपामृ°.

सरण्यूः

अपागूहन्निति । देवश्रवस आर्षम् । अपागूहन् अमृताम् एतामुषसं सूर्यादुपायस्थायां मर्त्येभ्यो मनुष्येभ्य । के ते । रश्मयः । कृत्वी सवर्णामदुर्विवस्वते । तत्समवर्णामेतां कृत्वा सरण्युम् अददुः विवस्वते आदित्याय । उताश्विनावभरत् स्तुतिभिः सा उषाः । स चाश्विनोः स्तुतिकालः । अथवा । सरण्यूरभरद्धविषा । स चाश्विनोर्योगकालः । यत्तदासीत् उषसो रूपं सरण्व्या वा अजहात् अत्यजत् द्वा द्वौ मिथुना मिथुनौ सरण्युः । ‘मध्यमं

नैरुक्तमते मिथुनौ मध्यमो माध्यमिका च वाक्

च माध्यमिकां च वाचमिति नैरुक्ताः’। यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इवैष तयोस्त्यागः ।

यमो यमी चेत्यैतिहासिकाः

‘यमं च यमीं चेत्यैतिहासिकाः’। तन्मतेन मन्त्रार्थस्य योजना । त एव रश्मयः प्राणाधिदेवताभावमापन्नास्तेषु व्यस्तं रूपं चेत्यैतिहासिको व्यवहारः । तां त्वाष्ट्रीं सरण्युमश्वां कृत्वा तथा सत्याश्विनोर्जन्म भविष्यं पश्यन्तो लोकहिताय अमृताम् अमरणधर्मिणीं देवीमपागूहन् अन्तर्हितां चक्रुः मर्त्येभ्यो मनुष्येभ्यः । उत्तरान् कुरून् प्रति निन्युः । ततश्चान्यां तत्सवर्णां छायाप्रभवां कृत्वा तामददुर्विवस्वते । उताश्विनावभरत् । यत् आश्वं तदा रूपमासीत्तेन सा सरण्यूरश्विनावभरत् अजनयत् अपुष्णात् उत्तरेषु कुरुषु । अजहादु द्वा मिथुना सरण्यूः । द्वावन्यौ मिथुनौ यमं च यमीं चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति ‘ तत्रेतिहासमाचक्षते ’। ऋजुरितिहासार्थः । यथा त्वाष्ट्री सरण्यूर्विवस्वतोढा सा च तस्मान्ननाश । ‘ तदभिवादिन्येषर्ग्भवति ’ ॥ १० ॥

१ ग. °त्रिति° । दे°. २ क. ख. घ °स्तेष्वन्यत्तद्रूपं°; ग. ज. °स्तेष्वन्यद्रूपं; च. °स्तेष्वन्यद्रूपं °व्यस्तं रूपं° (तद्रू:) ट. °स्तेष्वन्यत्तद्रूपं° व्यस्तं रू; ठ. ड. स्तेष्वन्यस्तद्व्यस्तं तद्रूपं°. ३ क. ख. घ. ट. ठ. ड. भविष्यत्; च. भविष्यं° ष्यत्. ४ ग. च. ज. °भरद्यत् । आश्वं° ५ ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १० खण्ड.; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति.

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति। यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ( ऋ० सं० १० । १७ । १ )॥ त्वष्टा दुहितुर्वहनं करोतीतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभिसमागच्छन्ति यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ ११ ॥

इति द्वादशाध्यायस्य प्रथमः पादः ।

त्वष्टा दुहित्र इति । पूर्वयैव समानार्थं विनियोगश्च । त्वष्टा देवो

**सैव**

विश्वकर्मा यं पुराणविदो वदन्ति स दुहितुः वहतुं वहनं विवाहं करोतीति इदं विश्वं भुवनं भूतजातं विवाहदर्शनप्रेप्सया समेति। स हि नित्यानां स्वभावः । यमस्य माता । भविष्यता योगेनोच्यते। पर्युह्यमाना पर्यूढा यमं च यमीं च जनयित्वा ततो महो महतो जाया विवस्वतो देवस्य जाया भार्या हित्वा अपत्ये मिथुनौ आश्वं रूपं कृत्वा ननाशेति ।

नैरुक्तपक्षे तु त्वष्टा मध्यमस्तमोभागस्योषसो दुहितुः दूरे हितायाः

**नैरुक्तपक्षेऽर्थः**

प्रकाशरूपाया वहतुं वहनं विवस्वतः करोति । इदं विश्वं भुवनं समेति । प्रभातमिति मत्वा सर्वाणि भूतानि स्वोस्वितिकर्तव्यतासु अभिसमागच्छन्ति । यमस्य माता पर्युह्यमाना । यमस्य मध्यमस्य माता देवधर्मेण । अथवा । द्युस्थानस्यैव जाया सा मातेति । जायतेऽस्यां पुत्रत्वेन पतिः जाया भार्या । महतो विवस्वतः प्रकाशेन प्रोत्सार्यमाणा ननाश नश्यति । संक्षेपतो भाष्यकारोऽर्थं निराह। ' रात्रिरादित्यस्य ' उषा जाया। सा 'आदित्यस्योदयेऽन्तर्धीयते ' ॥ ११ ॥

सप्तदशाध्यायस्य प्रथमः पादः।

१ छ. त. द. ' इति इदं विश्वं भुवनं समेति ' नास्ति. २ छ. प्रथमः पादः; त. इति द्वादशमोऽध्यायस्य प्र°; द. इति प्रथ°; ड. थ. ध. 'इति पादः' नास्ति. ३ ग. इति"। पू°. ४ क ख ट. ठ. ड. स्वासु स्व°; च. ॰स्वा° स्वासु. ५ क. ख. ट. °यत इति; च. °यते त इति; ठ. ड. °यत इति । इति निरुक्तोत्तरषट्कभाष्ये षष्ठाध्याये एकादशः खण्डः । इति निघण्टपञ्चकेन सह सप्तदशा°, क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति.

द्वितीयः पादः ।

**सविता व्याख्यातस्तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति तस्यैषा[3] भवति ॥ १२ ॥**

---

'सविता' (७) इति चतुष्टयम् । स पुनरेष 'व्याख्यातः' अभिधानतः ( निरु० ७ । ३१ ॥ १० । ३१ ) । इह पुनरादित्यः । 'तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति' । यदा यस्मिन् काले द्यौरेवापहततमस्का भवति न पृथिवी । पृथिव्यां तमो भवति । दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति । स सावित्रः कालः । तस्मिन् काल आदित्यः सवितोच्यते । 'तस्य' सवितुस्तत्कालोपलक्षितस्य 'एषा[2]' प्राधान्यस्तुतिः 'भवति' ॥ १२ ॥

---

**विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ( ऋ० सं० ५ । ८१ । २ ) ॥ सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति कवतेर्वा प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं[4] सविता वरणीयः प्रयाणमनूषसो विराजत्यधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादित्यधस्तात्तद्वेलायां[5] तमो भवत्येतस्मात्सामान्यादधस्ताद्रामोऽधस्तात्कृष्णः कस्मात्सामान्यादित्यग्निं चित्वा न रामामुपेयाद्रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात्सामान्यात्कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादिति कालानुवादं परीत्य कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरं भगो[6] व्याख्यातस्तस्य कालः प्रागुत्सर्पणात्तस्यैषा भवति ॥ १३ ॥**

१ क. ख. १ (१२); त. द. १. २ क. ख. च. ट. त. ह. °षा ऋक् प्रा°. ३ क. ख. १ ( १२ ); ठ. ह. °वति । इति निरुक्तभाष्ये ६ ध्याये १२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. व्यख्यपन्ना°; द. व्यख्यन्ना°. ५ छ. च. ठ. ह. °द्वेलायां ६ क. ख. २ ( १३ ); त. द. २.

विश्वा रूपाणि[1] प्रति मुञ्चते कविरिति[2] । श्यावाश्वस्यार्षम् । आभिप्लविके प्रथमेऽहनि विनियोगः ( आश्व० श्रौ० ७ । ५ ) शिक्यपाशप्रतिमोके च यजमानस्याग्नौ ( मैत्रा० सं० ३ । २ । १ ) । विश्वानि सर्वाणि रूपाणि रूपवत्सु अर्थेषु प्रतिमुञ्चते आबध्नाति[3] तमोऽपघ्नन् रूपाण्याविःकुर्वन् कविः क्रान्तदर्शनः । अथवा । कवतेः धातोर्गत्यर्थस्य कविः । गच्छत्यसौ नित्यम्[4] । किंच । कवित्वादेव प्रासावीत् प्रसुवति जनयति अभ्यनुजानाति च भद्रं द्विपदे चतुष्पदे द्विपद्भ्यश्च मनुष्यादिभ्यः चतुष्पाद्भ्यश्च गवादिभ्यः । यद्यत्तेषां भद्रं कल्याणं तत्तत्प्रसुवति । किंच । वि नाकमख्यत् । विख्यापयति नाकं द्यां च विदर्शयति । तदा हि तस्यां विकीर्णा रश्मयो भवन्ति । किंच अनुप्रयाणमुषसो विराजति । उषसः प्रयाणमनु विराजति प्रकाशते । सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा ।

सविता

' वि नाकमख्यत् ' इति सवितुः कालोपलक्षकं[5] मन्त्रलिङ्गं तत्पशुगुणसामान्येन समर्थयन्नाह । ' अधोरामः सावित्रः ( काठकसं० ५ । ८ । २ । तै० सं० ५ । ५ । २ । वाज० सं० २९ । ५८ ) इति पशुसमाम्नाये विज्ञायते ' । ' कस्मात् ' गुण ' सामान्यादिति ' ।

अधोरामः किमिति सावित्र इत्युच्यते

' अधस्तात्तद्वेलायां[6] तमो भवति ' । उपरिष्टाच्च ज्योतिः । शुक्लं तदा दिवि भवति कीर्णरश्मित्वात्तस्याः । अधस्तात्तु भूम्यां तदा तमो भवति । एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः ।

अधोरामः कस्मात्

आह ' अधोरामः ' इति किमुक्तं भवति । उच्यते । ' अधस्तात्कृष्णः ' इति यदुक्तं स्यात्तदुक्तं भवत्यधोराम इति ।

१ ठ. ढ. रूपाणीति श्यावा°. २ ग. °रिति । श्या°. ३ ग. च. ज. °भ्नातीति. ४ क. ख. घ. ट. ठ. ढ. कवति गच्छ°. ५ क. ख. घ. ट. ठ. ढ. °लक्षणकं. ६ ट. ठ. ढ. °द्वेलायां.

आह । कृष्णः ' कस्मात्सामान्यात् ' राम इत्युच्यते । शृणु । विज्ञायते हि ' अग्निं चित्वा प्रथमं चित्वा न रामामुपेयात् ' ( काठकसं० २१ । ७ ) इति । ' रामा ' इति शूद्रोच्यते । सा हि ' रमणाय ' एव ' उपेयते न धर्माय ' ( वासिष्ठधर्मशास्त्रम् । १८ । १८ ) । रमणार्थमेव सा । ' कृष्णजातीया ' । इत्येकार्थौ शब्दौ । अधुनोत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत्पशात्वयं रामशब्दो वृत्तः कृष्णसामान्यमात्रेण ।

रामशब्दस्य कथं कृष्ण इत्यर्थः

' कृकवाकुः सावित्रः ( मैत्रा० सं० ३ । १४ । १५ ) इति पशुसमाम्नाये विज्ञायते ' । स ' कस्मात्सामान्यात् ' इति । उच्यते । ' कालानुवादं परीत्य ' । सवितुः कालमसौ वक्तीत्येवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वम् । कृकवाकुशब्दमधुना निर्ब्रवीति । ' कृकवाकोः पूर्वं शब्दानुकरणम् ' । कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणम् । ' कृकः ' इत्येवमसौ शब्दं करोति । ' वचेरुत्तरं ' वाकुरित्येतत् । कृक इत्येवं वक्तीति कृकवाकुः ।

कृकवाकुः किमर्थं सावित्र इत्युच्यते

कृकवाकुः कस्मात्

' भगो ' (८) वक्तव्यः । स पुनरेव ' व्याख्यातः ' ( निरु० ३ । १६ ) स्त्रीभगेन शब्दव्युत्पत्तितः । तस्मात्सावित्रात्कालात्परत एतदुत्तमं ज्योतिर्भगाख्यं भवति । ' तस्यैषा भवति ' ॥ १३[1] ॥

**प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ( ऋ० सं० ७ । ४१ । २ ) ॥ प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्याध्रश्चिद्यं मन्यमान आढ्यार्लुर्दरिद्रस्तुरश्चित्तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया तूर्णगतिर्यमो राजा चिद्यं भगं भक्षीत्याहान्धो भग इत्याहुरनुत्सृप्तो न दृश्यते प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं भगो गच्छतीति वा[3] जनं गच्छत्यादित्य[4] उदयेन सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा तस्यैषा भवति ॥ १४ ॥**

१ ठ. क. ख. २ (१६); °वति । इति निरुक्तभाष्ये ६ ध्याये १३ खण्डः ( ङ. पुस्तके इदं नास्ति ); ग. च. वर्जमितरेष्वङ्को नास्ति. २ ङ. थ. 'ढ्यार्लुर्द°. ३ क. ख. छ. त. द. वा विज्ञायते ज°. ४ क. ख. ३ (१४); त. द. ३.

